प्रथम
उल्ला

# कुलार्णवम् ।

## प्रथम उल्लासः ।

अजस्रमदनिःस्यन्दलहरीलालितालये ।
कवलीकृतविघ्नाय पुराणकरिणे नमः ॥
गुरुं गणपतिं दुर्गां वटुकं शिवमच्युतम् ।
ब्रह्माणं गिरिजां लक्ष्मीं वाणीं वन्दे विभूतये ॥
अनाद्यायाखिलाद्याय यमिने गतमायिने ।
अरूपाय स्वरूपाय शिवाय गुरवे नमः ॥
पराप्रसादमन्त्राय सच्चिदानन्दहेतवे ।
अग्नीषोमस्वरूपाय सात्त्विकाय नमो नमः ॥

देव्युवाच । भगवन् देव ! देवेश ! पञ्चकृत्यविधायक ! ।
सर्वज्ञ ! भक्तिसुलभ ! शरणागतवत्सल ! ॥
कुलेश ! परमेशान ! करुणामृतवारिधे ! ।
असारे घोरसंसारे सर्वदुःखमलीमसाः ॥
नानाविधशरीरस्था अनन्ता जीवराशयः ।
जायन्ते च म्रियन्ते च तेषामन्तो न विद्यते ॥
घोरदुःखातुरादेव न सुखी जायते क्वचित् ।
केनोपायेन देवेश ! मुच्यते वद मे प्रभो ! ॥

ईश्वर उवाच । शृणु देवि ! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।

तस्य श्रवणमात्रेण संशयान्मुच्यते नरः ॥
अस्ति देवि ! परब्रह्मस्वरूपो निष्कलः शिवः ।
सर्वज्ञः सर्वकर्त्ता च सर्वेशो निर्मलाशयः ॥
स्वयं ज्योतिरनाद्यन्तो निर्विकारः परात्परः ।
निर्गुणः सच्चिदानन्दस्तदंशा जीवसंज्ञकाः ॥
असत्यविद्योपहता यथाग्नौ विस्फुलिङ्गकाः ।
सर्वाद्युपाधिभिन्नास्ते कर्मादिभिरनादिभिः ॥
सुखदुःखप्रदैः स्वीयैः पुण्यपापैर्नियन्त्रिताः ।
तत्तज्जातियुतं देहं आयुर्भोगञ्च कर्मजम् ॥
प्रतिजन्म प्रपद्यन्ते तेषामन्तो न विद्यते ।
सूक्ष्मलिङ्गशरीरन्तदामोक्षादक्षयं प्रिये ! ।
स्थावराः क्रिमयश्चाब्जाः पक्षिणः पशवो नराः ॥
धार्मिकास्त्रिदशास्तद्वन्मोक्षिणश्च यथाक्रमम् ।
चतुर्विधशरीराणि धृत्वा धृत्वा सहस्रशः ॥
सुकृतान्मानवो भूत्वा ज्ञानी चेन्मोक्षमाप्नुयात् ।
चतुरशीतिलक्षेषु शरीरेषु शरीरिणाम् ॥
न मानुष्यं विनान्यत्र तत्त्वज्ञानन्तु लभ्यते ।
अत्र जन्मसहस्रेषु सहस्रैरपि पार्वति ! ॥
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् ।
सोपानभूतं मोक्षस्य मानुष्यं प्राप्य दुर्लभम् ॥
यस्तारयति नात्मानं तस्मात् पापतरोऽत्र कः ।
ततश्चाप्युत्तमं जन्म लब्ध्वा चेन्द्रियसौष्ठवम् ॥
न वेत्त्यात्महितं यस्तु स भवेद् ब्रह्मघातकः ।
विना देहेन कस्यापि पुरुषार्थो न विद्यते ॥
तस्माद्देहधनं रक्ष्यं पुण्यकर्माणि साधयेत् ।
रक्षेत् सर्वात्मनात्मानं आत्मा सर्वस्य भाजनम् ॥

रक्षणे यत्नमातिष्ठेद् यावत्तत्त्वं न पश्यति।
पुनर्ग्रामाः पुनः क्षेत्रं पुनर्वित्तं पुनर्गृहम्।
पुनः शुभाशुभं कर्म न शरीरं पुनः पुनः॥
शरीररक्षणायासः क्रियते सर्वदा जनैः।
न हीच्छन्ति तनुत्यागमपि कुष्ठादिरोगिणः॥
तद्‌गोपितं स्याद् यत्नेन धर्मज्ञानार्थमेव च।
ज्ञानञ्च ध्यानयोगश्च सोऽचिरात् परिमुच्यते॥
प्रागेव यदि नात्मानं अहितेभ्यो निवारयेत्।
कोऽन्यो हितकरस्तस्मादात्मानं तारयिष्यति॥
इहैव नरकव्याधेश्चिकित्सां न करोति यः।
गत्वा निरौषधं स्थानं नीरुजः किं करिष्यति॥
यावत्तिष्ठति देहोऽयं तावत्तत्त्वं समभ्यसेत्।
सन्दीप्ते भवने को वा कूपं खनति दुर्मतिः॥
व्याघ्रीवास्ते जरा चायुर्याति भिन्नघटाम्बुवत्।
निघ्नन्ति रिपुवद्रोगास्तस्माच्छ्रेयः समाचरेत्॥
यावन्नाश्रयते दुःखं यावन्नायान्ति चापदः।
यावन्नेन्द्रियवैकल्यं तावच्छ्रेयः समाचरेत्॥
कालो न ज्ञायते नानाकार्य्यैः संसारसम्भवैः।
सुखदुःखैर्जनो हन्ति न वेत्ति हितमात्मनः॥
यातनार्त्तानापन्नतान् दृष्ट्वातिदुःखितान् मृतान्।
लोको मोहसुरां पीत्वा न वेत्ति हितमात्मनः॥
सम्पदः स्वप्नसङ्काशा यौवनं कुसुमोपमम्।
तड़िच्चञ्चलमायुश्च कस्य कस्मादतो धृतिः॥
शतञ्जीवितमित्यल्पं निद्रा स्यादर्द्धहारिणी।
बाल्यरोगजरादुःखैरर्द्धं तदपि निष्फलम्।
प्रारब्धव्ये निरुद्योगो जागर्त्तव्ये प्रसुप्तकः।

विश्वस्तव्यो भयस्थाने हा नरः केन हन्यते ॥
तोयफेनसमे देहे जीवे शकुनिवत् स्थिते ।
अनित्ये प्रियसंसारे कथं तिष्ठन्ति निर्भयाः ॥
अहिते हितबुद्धिः स्यादध्रुवे ध्रुवचिन्तकः ।
अनर्थे चार्थविज्ञानी स मृत्युं न हि वेत्ति किम् ।
पश्यन्नपि न पश्येत् स शृण्वन्नपि न बुध्यति ॥
पठन्नपि न जानाति तव मायाविमोहितः ।
सन्निमज्जज्जगदिदं गम्भीरे कालसागरे ।
मृत्युरोगमहाग्राहे न किञ्चिदपि बुध्यति ।
प्रतिक्षणमयं कायो जीर्य्यमाणो निरीक्ष्यते ।
आमकुम्भ इवाम्भःस्थो विशीर्णं इव भाव्यते ॥
युज्यते वेष्टनं वायोराकाशस्य च खण्डनम् ।
ग्रथनञ्च तरङ्गाणामास्था नायुषि युज्यते ।
पृथिवी दह्यते येन मेरुश्चापि विशीर्य्यते ।
शुष्यते सागरजलं शरीरे देवि ! का कथा ॥
अपत्यं मे कलत्रं मे धनं मे बान्धवाश्च मे ।
लपन्तमिति मर्त्त्यं हि हन्ति कालवृकोदरः ॥
इदं कृतमिदं कार्य्यमिदमन्यत् कृताकृतम् ।
एवमीहासमायुक्तं मृत्युरत्ति जनं प्रिये ! ॥
श्वः कार्य्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
न हि प्रतीक्षते मृत्युः कृतं वाप्यथवा कृतम् ॥
जरादर्शितपन्थानं प्रचण्डव्याधिसैनिकम् ।
मृत्युशत्रुसमादिष्टमायान्तं किं न पश्यति ।
कृष्णसूचीविनिर्भिन्नं मिश्रं विषयसर्पिषा ।
रागद्वेषानले पक्वं मृत्युरश्नाति मानवम् ॥
बालांश्च यौवनस्थांश्च वृद्धान् गर्भगतानपि ।

सर्वानादिशते मृत्युरेवम्भूतमिदं जगत्॥
ब्रह्मविष्णुमहेशादिदेवता भूतजातयः।
नाशमेवानुधावन्ति तस्माच्छ्रेयः समाचरेत्॥
स्वस्ववर्णाश्रमाचारलङ्घनाद्दुष्प्रतिग्रहात्।
परस्त्रीधनलोभाच्च नृणामायुःक्षयो भवेत्॥
वेदशास्त्राद्यनभ्यासात्तथैव गुर्वनर्च्चनात्।
नृणामायुःक्षयो भूयादिन्द्रियाणामनिग्रहात्॥
व्याधिराधिर्विषं शस्त्रं ना सर्पः पशवो मृगाः।
निर्वाणं येन निर्दिष्टं तेन गच्छन्ति जन्तवः॥
जीवस्तृणजलौकेव देहाद्देहान्तरं व्रजेत्।
सम्प्राप्य परमंशेन देहं त्यजति पूर्वजम्॥
सम्प्राप्य चोत्तमं देहमिति पाठान्तरम्।
बाल्ययौवनवृद्धत्वं यथा देहान्तरादिकम्॥
तथा देहान्तरप्राप्तिर्गेहाद् गृहमिवागतिः।
जनाः कृत्वेह कर्माणि सुखदुःखानि भुञ्जते॥
परत्र हानितो देवि! यान्त्यायान्ति पुनः पुनः।
इह यत् क्रियते कर्म तत् परत्रोपभुज्यते॥
सिक्तमूलस्य वृक्षस्य फलं शाखासु दृश्यते।
दारिद्र्यदुःखरोगाश्च बन्धनं व्यसनानि च॥
आत्मापराधवृक्षस्य फलान्येतानि देहिनाम्।
निःसङ्ग एव मोक्षः स्याद्दोषाः सर्वे च सङ्गजाः॥
सङ्गाच्च चलते ज्ञानी चावश्यं किमुताल्पवित्।
सङ्गः सर्वात्मना त्याज्यः स चेत् त्यक्तुं न शक्यते॥
सद्भिः सह च कर्त्तव्यः सतां सङ्गो हि भेषजम्।
सत्सङ्गश्च विवेकश्च निर्मलं नयनद्वयम्॥
यस्य नास्ति नरः सोऽन्धः कथं न स्यादमार्गगः।

यावतः कुरुते जन्तुः सम्बन्धान्मनसः प्रियान् ॥
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ।
स्वदेहमपि जीवोऽयं त्यक्त्वा याति सुरेश्वरि ! ॥
स्त्रीमातृपितृपुत्रादिसम्बन्धः केन हेतुना ।
दुःखमूलो हि संसारः स यस्यास्ति स दुःखितः ॥
तस्य त्यागः कृतो येन स सुखी नापरः प्रिये ! ॥
प्रभवं सर्वदुःखानामाश्रयः सकलापदाम् ॥
आलयं सर्वपापानां संसारं वर्जयेत् प्रिये ! ।
अबन्धबन्धनं घोरं मिश्रीकृतं महाविषम् ॥
अशस्त्रखण्डनं देवि ! संसारासक्तचेतसाम् ।
आदिमध्यावसानेषु सर्वदुःखमिदं जगत् ॥
तस्मात् सन्त्यज्य संसारं तत्त्वनिष्ठः सुखी भवेत् ।
लोहदारुमयैः पाशैर्दृढ़बन्धोऽपि मुच्यते ॥
स्त्रीधनादिषु संसक्तो मुच्यते न कदाचन ।
कुटुम्बचिन्तायुक्तस्य श्रुतशीलादयो गुणाः ॥
अपक्वकुम्भजलवन्नश्यन्त्यङ्गेन तेन हि ।
वाञ्छिताशेषचित्तैस्तैर्नित्यं लोको विनाशितः ॥
हा हन्त ! विषयाहारैर्देहस्थेन्द्रियतस्करैः ।
मांसलुब्धो यथा मत्स्यो लोहशङ्कुं न पश्यति ॥
सुखलुब्धस्तथा देही मायाशीलं न पश्यति ।
हिताहितं न जानन्तो नित्यमुन्मार्गगामिणः ॥
कुक्षिपूरणनिष्ठा ये तेऽबुधा नारकाः प्रिये ! ।
निद्रादिमैथुनाहाराः सर्वेषां प्राणिनां समाः ॥
ज्ञानवान्मानवः प्रोक्तो ज्ञानहीनः पशुः प्रिये ! ।
प्रभाते मलमूत्राभ्यां क्षुत्तृड्भ्यां मध्यगे रवौ ॥
रात्रौ मदननिद्राभ्यां बाध्यन्ते मानवाः प्रिये ! ।

स्वदेहधर्मदारादिनिरताः सर्वजन्तवः॥
जायन्ते च म्रियन्ते च हा हन्ताज्ञानमोहिताः।
स्वस्ववर्णाश्रमाचारनिरताः सर्वमानवाः॥
न जानन्ति परं तत्त्वं मूढ़ा नश्यन्ति पार्वति!।
क्रियायासपराः केचिद् व्रतधर्मादिसंयुताः॥
अज्ञानसम्भृतात्मानः सञ्चरन्ति प्रतारकाः।
नाममात्रेण सन्तुष्टाः कर्मकाण्डरता नराः॥
मन्त्रोच्चारणहोमाद्यैर्भ्रामिताः क्रतुविस्तरैः।
एकभक्तोपवासाद्यैर्नियमैः कायशोषणैः॥
मूढ़ाः परोक्षमिच्छन्ति तव मायाविमोहिताः।
देहदण्डनमात्रेण का सिद्धिरविवेकिनाम्॥
वल्मीकताड़नाद्देवि! मृतः कोऽत्र महोरगः।
धनार्जनोपयुक्तास्ते दाम्भिकावेशधारिणः॥
भ्रमन्ति ज्ञानिवल्लुब्धा भ्रामयन्ति जनानपि।
सांसारिकसुखासक्तं ब्रह्मज्ञोऽस्मीतिवादिनम्॥
कर्मब्रह्मोभयभ्रष्टं तं त्यजेदन्त्यजं यथा।
गृहारण्यसमालोके गतव्रीड़ा दिगम्बराः॥
चरन्ति गर्दभाद्याश्च विविक्तास्ते भवन्ति किम्।
आजन्ममरणान्तञ्च गङ्गादितटिनीस्थिताः॥
मातङ्गमत्स्यप्रमुखा व्रतिनस्ते भवन्ति किम्।
वदन्ति हृदयानन्दं पठन्ति शुकसारिकाः॥
तत्रैव पुरतो देवि! विबुधाः किं भवन्ति हि।
तृणपर्णोदकाहाराः सततं वनवासिनः॥
हरिणादिमृगा देवि! तापसास्ते भवन्ति किम्।
पारावताः शिलाहाराः परमेश्वरि! चातकाः॥
न पिबन्ति महीतोयं योगिनस्ते भवन्ति किम्।

शीतवातातपसहा जम्बालश्मशया: प्रिये ! ॥
तिष्ठन्ति शूकराद्याश्च योगिनस्ते भवन्ति किम् ।
तस्मादित्यादिकं कर्म लोकरञ्जनकारणम् ॥
मोक्षस्य कारणं साक्षात्तत्त्वज्ञानं कुलेश्वरि ! ।
षड्दर्शनमहाकूपे पतिता: पशव: प्रिये ! ॥
परमार्थं न जानन्ति पशुपाशनियन्त्रिता: ।
वेदार्थमपरिज्ञाय दह्यमाना इतस्तत: ॥
कालोर्मिणा ग्रहग्रस्तास्तिष्ठन्ति हि कुतार्किका: ।
वेदागमपुराणज्ञ: परमार्थं न वेत्ति च ।
विडम्बकस्य तस्यापि तत् सर्वं काकभाषितम् ॥
इदं ज्ञानमिदं ज्ञेयं इति चिन्तासमाकुला: ।
पठन्त्यहर्निशं देवि ! परतत्त्वपराङ्मुखा: ॥
काव्यच्छन्दोनिबन्धेन काव्यालङ्कारशोभिता: ।
चिन्तया दु:खिता मूढ़ास्तिष्ठन्ति व्याकुलेन्द्रिया: ॥
अन्यथा परमं तत्त्वं जना: क्लिश्यन्ति चान्यथा ।
अन्यथा शास्त्रसद्भावं व्याख्यां कुर्वन्ति चान्यथा ॥
कथयन्त्युन्मनीभावं स्वयं नानुभवन्ति हि ।
अहङ्कारहता: केचिदुपदेशविवर्ज्जिता: ॥
पठन्ति वेदशास्त्राणि दुर्लभा भववेदका: ।
न जानन्ति परं तत्त्वं दर्वी पाकरसं यथा ॥
शिरो वहति पुष्पाणि गन्धं जानाति नासिका ।
पठन्ति वेदशास्त्राणि विवदन्ति परस्परम् ॥
तत्त्वमात्मस्थमज्ञात्वा मूढ़: शास्त्रेषु मुह्यति ।
गोप: कक्षगतं छागं कूपे पश्यति दुर्म्मति: ॥
संसारमोहनाशाय शाब्दबोधो न हि क्षम: ।
न निवर्त्तेत तिमिरं कदाचिद्दीपशिखया ॥

प्रज्ञाहीनस्य पठतो ह्यन्धस्यादर्शनं यथा।
देवि! प्रज्ञावतः शास्त्रं तत्त्वज्ञानस्य कारणम्॥
अग्रतः पृष्ठतः केचित् पार्श्वयोरपि केचन।
तत्त्वमीदृक् तादृगिति विवदन्ति परस्परम्॥
सद्विद्यादानसूराद्यैर्गुणैर्विख्यातमानवाः।
ईदृशस्तादृशश्चेति दूरस्थः कथ्यते जनैः॥
प्रत्यक्षग्रहणं नास्ति वार्त्तया ग्रहणं प्रिये!।
एवं ये शास्त्रसंमूढास्ते दूरस्था न संशयः॥
इदं ज्ञानमिदं ज्ञेयं सर्वतः श्रोतुमिच्छति।
देवि! वर्षसहस्रायुः शास्त्रान्तं नैव गच्छति॥
वेदाद्यनेकशास्त्राणि स्वल्पायुर्विघ्नकोटयः।
तस्मात् सारं विजानीयात् क्षीरं हंस इवाम्भसि॥
अभ्यस्य सर्वशास्त्राणि तत्त्वं ज्ञात्वा हि बुद्धिमान्।
पलालमिव धान्यार्थी सर्वशास्त्रं परित्यजेत्॥
यथामृतेन तृप्तस्य नाहारेण प्रयोजनम्।
तत्त्वज्ञस्य तथा देवि! न शास्त्रेण प्रयोजनम्॥
न वेदाध्ययनान्मुक्तिर्न शास्त्रपठनादपि।
ज्ञानादेव हि मुक्तिः स्यान्नान्यथा वीरवन्दिते!॥
न वेदाः कारणं मुक्तेर्दर्शनानि न कारणम्।
तथैव सर्वशास्त्राणि ज्ञानमेवं हि कारणम्॥
मुक्तिदा गुरुवागेका विद्याः सर्वा विडम्बकाः।
काष्ठभारसहस्रेभ्यो ह्येकं सञ्जीवनं परम्॥
अद्वैतन्तु शिवेनोक्तं क्रियायासविवर्जितम्।
गुरुवक्त्रेण लभ्येत नाधीतागमकोटिभिः॥
आगमोत्थं विवेकोत्थं द्विधा ज्ञानं प्रचक्षते।
शब्दब्रह्मागममयं परंब्रह्म विवेकजम्॥

अद्वैतं केचिदिच्छन्ति द्वैतमिच्छन्ति चापरे ।
मम तत्त्वं विजानन्तोऽद्वैताद्वैतविवर्जितम् ॥
द्वे पदे बन्धमोक्षाय ममेति निर्ममेति च ।
ममेति बध्यते जन्तुर्न ममेति विमुच्यते ॥
तत् कर्म यन्न बन्धाय विद्या सा या विमुक्तये ।
आयासायापरं कर्म विद्यान्या शिल्पनैपुणम् ॥
यावत् कामादि दीप्येत यावत् संसारवासना ।
यावदिन्द्रियचापल्यं तावत्तत्त्वकथा कुतः ॥
यावत् प्रयत्नेरोगोऽस्ति यावत् सङ्कल्पकल्पना ।
यावन्न मनसः स्थैर्य्यं तावत्तत्त्वकथा कुतः ॥
यावद्देहाभिमानस्य ममता यावदस्ति हि ।
यावन्न गुरुकारुण्यं तावत्तत्त्वकथा कुतः ॥
यावत्तपो व्रतं तीर्थं जपहोमार्चनादिकम् ।
वेदशास्त्रागमकथा तावत्तत्त्वकथा कुतः ॥
तस्मात् सर्वप्रयत्नेन सर्वावस्थासु सर्वदा ।
तत्त्वनिष्ठो भवेद्देवि ! यदीच्छेत् सिद्धिमात्मनः ॥
धर्मज्ञानसुपुष्पस्य स्वकुलोक्तफलस्य च ।
तापत्रयार्त्तिसन्तप्तश्छायां कल्पतरोः श्रयेत् ॥
बहुनात्र किमुक्तेन रहस्यं शृणु पार्वति ! ।
कुलधर्मं ऋते मुक्तिर्नास्ति सत्यं न संशयः ॥
तस्माद्वदामि तत्त्वन्ते विज्ञायात्र गुरोर्मुखात् ।
सुखेन मुच्यते देवि ! घोरसंसारबन्धनात् ॥
इति ते कथिता काचिज्जीवजातिस्थितिः प्रिये ! ।
समासेन कुलेशानि ! किं भूयः श्रोतुमिच्छसि ॥

इति कुलार्णवे महारहस्ये सर्वागमोत्तमोत्तमे जीवस्थितिकथनं नाम प्रथम उल्लासः ।

# द्वितीय उल्लासः ।

श्रीदेव्युवाच । कुलेश ! श्रोतुमिच्छामि सर्वजीवदयानिधे ! ।

कुलधर्मस्त्वया देव ! सूचितो न प्रकाशितः ॥

तस्य धर्मस्य माहात्म्यं सर्वधर्मोत्तमस्य च ।

वद मे परमेशान ! यदि चास्ति कृपा मयि ॥

ईश्वर उवाच । शृणु देवि ! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।

तस्य श्रवणमात्रेण योगिनीनां प्रियो भवेत् ॥

ब्रह्मविष्णुगुहादिभ्यो न मया कथितं प्रिये ! ।

कथयामि तव स्नेहात् शृणुष्वैकाग्रमानसा ॥

पारम्पर्य्यक्रमायातं वक्त्राद्वक्त्रेषु संस्थितम् ।

अकथ्यं परमार्थेन तथापि कथयामि ते ॥

त्वयापि गोपितव्यं हि न देयं यस्य कस्यचित् ।

देयं भक्ताय शिष्याय अन्यथा पतनं भवेत् ॥

सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं परम् ।

वैष्णवादुत्तमं शैवं शैवाद्दक्षिणमुत्तमम् ॥

दक्षिणादुत्तमं वामं वामात् सिद्धान्तमुत्तमम् ।

सिद्धान्तादुत्तमं कौलं कौलात् परतरं न हि ॥

गुह्याद्गुह्यतरं देवि ! सारात्सारं परात्परम् ।

साक्षात् परतरं देवि ! कर्णाकर्णगतं कुलम् ॥

मथित्वा ज्ञानमन्थेन वेदागममहार्णवम् ।

सर्वज्ञेन मया देवि ! कुलधर्मः समुद्धृतः ॥

एकतः सकला धर्मा यज्ञतीर्थव्रतादयः ।

एकतः कुलधर्माणि तत्र कौलोऽधिकः प्रिये ! ॥

प्रविशन्ति यथा नद्यः समुद्रं ऋजुवक्रगाः ।

तथैव विविधा धर्माः प्रविष्टाः कुलमेव हि ॥

यथा हस्तिपदे लीनं सर्वप्राणिपदं भवेत् ।

दर्शनानि च सर्वाणि कुल एव तथा प्रिये ! ॥

तस्मात्तु समयाः सर्वे कुलधर्मेण नो समाः ।
मेरुसर्षपयोर्यद्वत् सूर्य्यखद्योतयोर्यथा ॥
तथान्यसमयस्यापि कुलस्य महदन्तरम् ।
अस्ति चेत् त्वत्समा नारी मत्समः पुरुषोऽस्ति चेत् ॥
कुलेन समधर्मस्तु तथापि न कदाचन ।
कुलधर्मादिमोहेन योऽन्यधर्मेण दुर्मतिः ॥
स काष्ठाभरणं क्रेयात् सोऽन्त्यजो नात्र संशयः ।
सकृत् संसारिणं ब्रूयात् इति पुस्तकान्तरे च पाठः ॥
यो वा कुलाधिकं धर्ममज्ञानाद्भजति प्रिये ! ।
ब्रह्महत्याधिकं पापं स प्राप्नोति न संशयः ॥
कुलधर्मप्रवहणं समारुह्य नरोत्तमः ।
स्वर्गाद्वीपान्तरं गत्वा मोक्षरत्नं समश्नुते ॥
दर्शनेषु च सर्वेषु चिराभ्यासेन मानवाः ।
मोक्षं लभन्ते कौले तु सद्य एव न संशयः ॥
बहुनात्र किमुक्तेन शृणु मत्प्राणवल्लभे ! ।
न कौलसमधर्मोऽस्ति त्वां शपे कुलनायिके ! ॥
योगी चेन्नैव भोगी स्याद् भोगी चेन्नैव योगवित् ।
भोगयोगात्मकं कौलं तस्मात् सर्वाधिकः प्रिये ! ॥
भोगो योगायते साक्षात् पातकं सुकृतायते ।
मोक्षायते च संसारः कुलधर्मः कुलेश्वरि ! ॥
ब्रह्मेन्द्रादित्यरुद्रादिदेवता मुनिराक्षसाः ।
कुलधर्मपरा देवि ! मानुषेषु च का कथा ॥
विहाय सर्वधर्मांश्च नानागुरुमतानि च ।
कुलमेव विजानीयाद् यदीच्छेत् सिद्धिमात्मनः ॥
पूर्वजन्मकृताभ्यासात् कुलधर्मः प्रकाशते ।
स्वप्नोत्थितप्रत्ययवदुपदेशादिकं विना ॥

जन्मभिर्बहुभिर्देव ! या बुद्धिर्विहिता नृणाम्।
तामेव लभते जन्तुरुपदेशो निरर्थकः॥
शैववैष्णवदौर्गार्कगाणपत्येन्दुसम्भवैः।
मन्त्रैर्विशुद्धचित्तस्य कुलज्ञानं प्रकाशते॥
सर्वधर्माश्च देवेशि ! पुनरावर्त्तकाः स्मृताः।
कुलधर्मस्थिता ये च ते सर्वेऽप्यनिवर्त्तकाः॥
पुराकृततपोदानयज्ञतीर्थजपव्रतैः।
क्षीणांहसां नृणां देवि ! कुलज्ञानं प्रकाशते॥
त्वमहं देवि ! कल्याणं यस्य तस्याच्युतावपि।
देवतागुरुभक्तस्य कुलज्ञानं प्रकाशते॥
शुद्धचित्तस्य शान्तस्य धर्मिणो गुरुसेविनः।
अतिभक्तस्य गुह्यस्य कुलज्ञानं प्रकाशते॥
श्रीगुरोः कुलशास्त्रेषु कौलिकेषु कुलाश्रये।
यस्य भक्तिर्दृढा तस्य कुलज्ञानं प्रकाशते॥
शुद्धिविनयहर्षाद्यैः सदाचारदृढव्रतैः।
गुर्वाज्ञापालकैर्धर्मैः कुलज्ञानमवाप्यते॥
अनर्हे कुलविज्ञानं न तिष्ठति कदाचन।
तस्मात् परीक्ष्य वक्तव्यं कुलधर्मं मयोदितम्।
न ब्रूयात् कुलधर्मं तमयोग्ये कुलशासनम्।
आज्ञाभङ्गञ्च यः कुर्य्याद्देवताशापमाप्नुयात्॥
आराध्य समयाचारं कुलज्ञानं वदेद् यदि।
स गुरुश्चापि शिष्यश्च योगिनीनां भवेत् प्रभुः॥
बोधयित्वा गुरुः शिष्यं कुलज्ञानं प्रकाशयेत्।
लभेते तावुभौ साक्षाद् योगिनीवीरमेलनम्॥
अनायासेन संसारसागरं यस्तितीर्षति।
कुलधर्ममिदं ज्ञात्वा मुच्यते नात्र संशयः॥

कुलधर्ममहामार्गे गत्वा मुक्तिपुरीं व्रजेत् ।
अचिरान्नात्र सन्देहस्तस्मात् कौलं समाश्रयेत् ॥
कुलशास्त्रं परित्यज्य पशुशास्त्राणि योऽभ्यसेत् ।
स मूढः पायसं त्यक्त्वा भिक्षामटति पार्वति ! ॥
विहाय कुलशास्त्रं यः सर्वधर्मपरो भवेत् ।
करस्थं रत्नमुत्सृज्य दूरस्थं काचमीहते ॥
सन्त्यज्य कुलशास्त्राणि पशुशास्त्राणि यो जपेत् ।
स धान्यराशिमुत्सृज्य पांशुराशिं जिघृक्षति ॥
कुलान्वयं समुत्सृज्य योऽन्यमन्वयमीक्षते ।
तड़ागादिवत्तृष्णार्त्तो मृगतृष्णां प्रधावति ॥
यथेन्द्रजालजालाभाः क्षणमेव सुखावहाः ।
श्रीकौलादन्यसमयास्तादृशाः कुलनायिके ! ॥
कुलधर्ममजानन् हि यो मूढो मोक्षमिच्छति ।
पारावारमपारं स पाणिभ्यां तर्त्तुमिच्छति ॥
यो वान्यदर्शनेभ्यश्च भुक्तिं मुक्तिं च काङ्क्षति ।
स्वप्नलब्धधने लब्धे धनवान् स भवेद् यदि ॥
शुक्तौ रजतविभ्रान्तिर्यथा जायेत पार्वति ! ।
तथान्यसमयेभ्यश्च भुक्तिं मुक्तिं प्रकाशते ॥
सर्वधर्मविहीनोऽपि वर्णाश्रमविवर्जितः ।
कुलनिष्ठः कुलेशानि ! भुक्तिमुक्त्योः स भाजनम् ॥
कुलज्ञानविहीनोऽपि कुलभक्त्याश्रयो भवेत् ।
सोऽपि सद्गतिमाप्नोति किमु तस्य परायणात् ॥
कुलधर्मो हतो हन्ति रक्षितो रक्षति प्रिये ! ।
पूजितः पूजयत्याशु तस्मात्तं न परित्यज्येत् ॥
निन्दन्तु बान्धवा सर्वे त्यजन्तु स्त्रीसुतादयः ।
जना हसन्तु मां दृष्ट्वा राजानो दण्डयन्तु वा ॥

सेवे सेवे पुनः सेवे त्वामेव परदेवते ! ।
त्वत्कर्म नैव मुञ्चामि मनोवाक्कायकर्मभिः ॥
एवमापद्गतस्यापि यस्य भक्तिः सुनिश्चला ।
स तु सम्पूज्यते देवैरमुत्र स शिवो भवेत् ॥
रोगदारिद्र्यदुःखाद्यैः पीड़ितोऽप्यनिशं शिवे ! ।
यस्त्वामुपासते भक्त्या नरः सद्गतिमाप्नुयात् ॥
जनाः स्तुवन्तु निन्दन्तु लक्ष्मीर्गच्छतु तिष्ठतु ।
मृतिरद्य युगान्ते वा कौलं न परिवर्जयेत् ।
नार्थलोभान्न च क्रोधान्न द्वेषान्न च मत्सरात् ।
न कामान्न भयाद्वापि कुलं प्राप्तं परित्यजेत् ॥
यो ज्ञात्वा नार्चयेत् त्वान्तु कुलधर्मसमन्वितः ।
क्लिश्यतेऽज्ञानमात्रेण भूतावेशी यथा नरः ॥
पुलाका इव धान्येषु पतङ्गा इव जन्तुषु ।
वुद्बुदा इव तोयेषु ये कौलविमुखा हि ते ॥
तरवोऽपि हि जीवन्ति जीवन्ति मृगपक्षिणः ।
स जीवति मनो यस्य कुलधर्मे व्यवस्थितम् ॥
कुलधर्मविहीनस्य दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव श्वसन्निव स जीवति ॥
गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ।
कुलेश्वरि ! कुलाज्ञस्य तत्पशोरिव जीवति ॥
विद्वानपि च मूर्खोऽसौ धार्मिको वाप्यधार्मिकः ।
व्रतस्थोऽप्यव्रतस्थो वा यः कौलविमुखो जनः ॥
जातास्त्वत्रैव जगति जन्तवः साधुजीविनः ।
कुलधर्मपरा देवि ! विशेषा जनवादतः ॥
स पुमानुच्यते सद्भिः कुलधर्मपरायणः ।
अपरस्तु परं सत्यं अस्ति कूटत्वचारतः ॥

चतुर्वेदी कुलाज्ञानी श्वपचादधमः प्रिये ! ।
श्वपचोऽपि कुलज्ञानी ब्राह्मणादतिरिच्यते ॥ (৫৫)
गुरुकारुण्ययुक्तस्तु दीक्षानिर्धूतपातकः ।
कुलपूजारतो देवि ! सोऽयं कौलो न चेतरः ॥ (৫৬)
यः कौलिकः कुलज्ञानी न पश्यति न विन्दति ।
न पूजयति धिक् तस्य वृथा तस्यैव जीवितम् ॥ (৫৭)
ते धन्याः पुण्यकर्माणस्ते सन्तस्ते च योगिनः ।
येषां भाग्यवशाद्देवि ! कुलज्ञानं प्रकाशते ॥ (৫৯)
ते धन्यास्ते महात्मानः कृतार्थास्ते नरोत्तमाः ।
येषामुत्पद्यते चित्ते कुलज्ञानं मयोदितम् ॥ (৬০)
सर्वप्रकाशगमनं सर्वतीर्थावगाहनम् ।
यत् सर्वयज्ञाचरणं कुलधर्मप्रवेशनम् ॥ (৬১)
प्रविशन्ति कुलं धर्मं ये वै सुकृतिनो नराः ।
ते पुनर्जननीगर्भं न विशन्ति कदाचन ॥ (৬২)
प्रसङ्गेनापि यः कश्चित् कुलं कुलमितीरयेत् ।
कुलं तस्य धनं देवि ! भवति त्वदनुग्रहात् ॥ (৬৩)
कुलज्ञस्य कुलेशानि ! नान्यधर्मैः प्रयोजनम् ।
कुलेशि ! कुलनिष्ठानां कौलिकानां कुलात्मनाम् ॥ (৬৪)
ददासि परमं ज्ञानं चान्तकालेषु निश्चितम् ।
चिरायासाल्पफलदं पशुशास्त्रं पठन्ति ये ॥ (৬৫)
सुखेन सर्वफलदं कौलं कोऽत्र त्यजत्यहो ! ।
कुलज्ञो हि च सर्वज्ञो वेदशास्त्रार्जितोऽपि वा ॥ (৬৬)
वेदशास्त्रागमज्ञोऽपि कुलाज्ञस्त्वज्ञ एव हि ।
जानन्ति कुलमाहात्म्यं त्वद्भक्ता एव नापरे ॥ (৬৭)
चकोरा एव जानन्ति नान्ये चन्द्ररुचां रुचिम् ।
कुलज्ञा एव तुष्यन्ति श्रुत्वा कुलकथां प्रिये ! ॥ (৬৮)

अल्पकूपा विवर्द्धन्ते जीत्स्नया किं समुद्रवत् ।
नान्यधर्ममपेचन्ते कौलिकाः सारवेदिनः ॥
भृङ्गाः पुष्पान्तरं यद्वत् मन्दारामोदसेविनः ।
मानयन्ते हि सारज्ञाः कुलधर्मं न चेतरे ॥
शिवः शिरसि धत्ते त्वां सैंहिकेयो गिलत्यहो ।
अभिज्ञा एव जानन्ति नाभिज्ञाः कुलदर्शनम् ॥
जलमिश्रं पयःपानं वकः किं वेत्ति हंसवत् ।
शिवशक्तिमयो लोको लोके कौलं प्रतिष्ठितम् ॥
तस्मात् सर्वाधिकं कौलं सर्वसाधारणं कथम् ।
षड्दर्शनानि मेऽङ्गानि पादौ कुचिः करौ शिरः ॥
तेषु भेदन्तु यः कुर्य्यान्ममाङ्गं छेदयेत्तु सः ।
एतान्येव कुलस्यापि षड़ङ्गानि भवन्ति हि ॥
तस्मान्मदात्मकं कौलमहं कौलात्मकः प्रिये ! ।
दर्शनेष्वखिलेष्वेव फलदं चैकदैवतम् ॥
भुक्तिमुक्तिप्रदं नृणां कुलेऽस्मिन् दैवतं प्रिये ! ।
लोकधर्मविरुद्धोऽपि सिद्धयोगीश्वरीमते ॥
कुलं प्रमाणतां याति प्रत्यचफलदं यतः ।
प्रत्यचञ्च प्रमाणाय सर्वेषां प्राणिनां प्रिये ! ॥
उपलब्धिबलात्तस्य हताः सर्वे कुतार्किकाः ।
परोचं कोऽनुजानीते कस्य किं वा भविष्यति ॥
यद्वा प्रत्यचफलदं तदेवोत्तमदर्शनम् ।
कुलधर्ममिदं ज्ञात्वा मुच्यते सर्वमानवाः ॥
इति मत्वा महेशानि ! मया कौलं विगर्हितम् ।
त्वत्कारुण्यविहीनानां कुलज्ञानविरोधिनाम् ॥
पशूनामनभिज्ञानां कुलधर्मो विगर्हितः ।
यस्य जन्मान्तरे पापकर्मबाधादिका भवेत् ॥

न तस्य गुरुकारुण्यं कुलज्ञानं न जायते ।
यथान्धा नैव पश्यन्ति सूर्य्यं सर्वप्रकाशकम् ॥ (९२)
तथा कुलं न जानन्ति तव मायाविमोहिताः ।
शैववैष्णसौरादिदर्शनान्यपि भक्तितः ॥ (९३)
जपन्तो मानवा नित्यं वृथायासफलानि वै ।
वेदशास्त्रागमैः प्रोक्तं भोगमोक्षैकसाधनम् ॥ (९४)
मूढ़ो निन्दति हा हन्त ! मत्प्रियं तव दर्शनम् ।
भ्रामिता हि महादेवि ! पशवः शास्त्रकोटिषु ॥ (९५)
कुलधर्मं न जानन्ति वृथा ज्ञानाभिमानिनः ।
पशुशास्त्राणि सर्वाणि मयैव कथितानि हि ॥ (९६)
मूर्त्यन्तरन्तु गत्वैव मोहनाय दुरात्मनाम् ।
महापापवशात् नृणां तेषु वाञ्छाभिजायते ॥ (९७)
तेषाञ्च सद्गतिर्नास्ति कल्पकोटिशतैरपि ।
प्रेर्य्यमाणोऽपि पापात्मा कुले नैव प्रवर्त्तते ॥ (९८)
वार्य्यमाणोऽपि पुण्यात्मा कुलमेवाभिलम्बते ।
कुलधर्मेण देवत्वं देवाः सम्प्रतिपेदिरे ॥ (९९)
मुनियोगीश्वराद्याश्च सुसिद्धिं परमां गताः ।
पशुव्रतादिनिरताः सुलभा दाम्भिका भुवि ॥ (१००)
ये कौलमेव सेवन्ते ते महान्तोऽपि दुर्लभाः ।
मानवा बहवः सन्ति मिथ्यातत्त्वार्थवादिनः ॥ (१०१)
दुर्लभोऽयं कुलेशानि ! कुलतत्त्वविशारदः ।
यथा रोगातुराः केचिन्मानवाः कुलनायिके ! ॥ (१०२)
दिव्यौषधं न सेवन्ते महाव्याधिविनाशनम् ।
तद्व्याधिवर्द्धनापथ्यं कुर्वन्ति हि कुभेषजम् ॥ (१०३)
तथैव जन्ममरणं कृतां सांसारिकीं क्रियाम्
समाचरन्ति सततं त्वत्कारुण्यविवर्जिताः ॥ (१०४)

न भजन्ति कुलं धर्मं भवबन्धविमोचनम्।
यथा लवणलसूनमरीचादीन् वणिक्जनाः॥
यथा चारण्यजातांस्तु इति वा पाठः।
पदार्थानिव सम्प्रीत्या याचन्ते कुलनायिके!।
अनर्घ्याणि च रत्नानि न याचन्ते हि केचन॥
अमूल्यानि इति पाठान्तरम्।
तथैव पशुशास्त्राणि कर्मायासफलानि च।
इति पृच्छन्ति मूर्खा हि तव मायाविमोहिताः॥
कुलधर्मं न पृच्छन्ति भुक्तिमुक्तिफलप्रदम्।
कस्तूरीं कर्दमधिया कर्पूरं लवणेच्छया॥
शार्करं शर्कराभ्रान्त्या मणिं काचमनीषया।
यथा दृश्यं न मनुते करस्थमपि पामरः॥
तथा कौलं न जानन्ति त्वत्प्रसादविवर्जिताः।
अहो मोहस्य माहात्म्यं त्वन्मायाजनितस्य च।
किन्तु वच्यामि देवेशि! मोहयेदमरानपि॥
किमज्ञानपि देवेशि! इत्यन्यविधः पाठः।
कोऽयं मद्यं बलं खाद्यं समालोक्य प्रियामुखम्।
इत्येवाचरणं जाप्यं परिप्राप्य परं पदम्॥
गुरुकारुण्यसंलभ्यमीदृशं कुलदर्शनम्।
त्वद्भक्ता एव जानन्ति नेतरे भुक्तिमुक्तिदम्॥
गुरूपदेशरहिता महान्त इति केचन।
मोहयन्ति जनान् सर्वान् स्वयं पूर्वविमोहिताः॥
दुराचारपराः केचिद्वाचयन्ति च पामराः।
कथं पूतो भवेत् स्वामी सेवकाः स्युस्तथाविधाः॥
बहवः कौलिकं धर्मं मिथ्याज्ञानविडम्बकाः।
सुबुद्धा कल्पयन्तीत्थं पारम्पर्यविमोहिताः॥

मद्यपानेन मनुजो यदि सिद्धिं लभेत वै ।
मद्यपानरताः सर्वे सिद्धिं गच्छन्तु पामराः ॥ (११८)
मांसभक्षणमात्रेण यदि पुण्या गतिर्भवेत् ।
लोके मांसाशिनः सर्वे पुण्यभाजो भवन्ति हि ॥ (११९)
स्त्रीसम्भोगेन देवेशि ! यदि मोक्षो भवेत वै ।
सर्वेऽपि जन्तवो लोके मुक्ताः स्युः स्त्रीनिषेवणात् ॥ (१२०)
कुलमार्गो महादेवि ! न मया निन्दितः क्वचित् ।
आचाररहिता येऽत्र निन्दितास्ते न चेतरे ॥ (१२१)
अन्यथा कौलिके धर्मे आचारः कथितो मया ।
विचरन्त्यन्यथा देवि ! मूढ़ाः पण्डितमानिनः ॥ (१२२)
कृपाणधारागमनाद्व्याघ्रकण्ठावलम्बनात् ।
भुजङ्गधारणान्नूनमशक्यं कुलसेवनम् ॥ (१२३)
वृथापानन्तु देवेशि ! सुरापानं तदुच्यते ।
यन्महापातकं देवि ! देवादिषु निरूपितम् ॥ (१२४)
अनाघ्रेयमनालोच्यमस्पृश्यञ्चाप्यपेयकम् ।
मद्यं मांसं पशूनान्तु कौलिकानां महाफलम् ॥ (१२५)
अमेध्यानि द्विजातीनां मद्यान्येकादशैव तु ।
द्वादशाख्यं महामद्यं सर्वेषामधमं स्मृतम् ॥ (१२६)
सुरा वै मलमन्नानां पाप्मा मलमुच्यते ।
तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥ (१२७)
सुरादर्शनमात्रेण कुर्य्यात् सूर्य्यावलोकनम् ।
तत्समाघ्राणमात्रेण प्राणायामत्रयं चरेत् ॥ (१२८)
आजानुभ्यां भवेन्मग्नो जले चोपवसेदहः ।
ऊर्द्ध्वं नाभेस्त्रिरात्रस्तु मद्यस्य स्पर्शने विधिः ॥ (१२९)
सुरापाने ज्ञानकृते ज्वलन्तीं तां विनिक्षिपेत् ।
मुखे तया विनिक्षिप्ते ततः शुद्धिमवाप्नुयात् ॥ (१३०)

मद्यमांसादिदोषस्य प्रायश्चित्तविधिः स्मृतः ।
अविधानेन यो हन्यादात्मार्थं प्राणिनः प्रिये ! ॥ (১৫১)
निवसेन्नरके घोरे दिनानि पशुरोमभिः ।
सञ्चितानि दुराचारस्तिर्य्यग्योनिषु जायते ॥ (১৫২)
सञ्चितानि स्थाने गलितानि पाठः ।
अनुमन्ता विशसिता निहन्ता क्रयविक्रयी । (১৫৩)
संस्कर्त्ता चोपहर्त्ता च खादिताष्टौ च घातकाः ॥
धनेन च क्रेता हन्ति खादिता चोपभोगतः । (১৫৪)
घातको घातबन्धाभ्यामित्येष त्रिविधो बधः ॥
मांससन्दर्शनं कृत्वा सूर्य्यदर्शनमाचरेत् । (১৫৫)
तस्मादविधिना मांसं मद्यञ्च नाचरेत् क्वचित् ॥
विधिवत् सेव्यते देवि ! परमार्थं प्रसीदसि । (১৫৬)
नाशयस्व परज्ञानं सत्यमेतद्वरानने ! ॥
तृणं वाप्यविधानेन छेदयेन्न कदाचन । (১৫৭)
विधिना गां द्विजं वापि हत्वा पापैर्न लिप्यते ॥
बहुनात्र किमुक्तेन सर्वसारं शृणु प्रिये ! । (১৫৮)
जीवन्मुक्तिसुखोपायं कुलशास्त्रेषु गोपितम् ॥
यन्मुमुक्षोः फलं देवि ! नाफलस्यापि सेवितम् । (১৫৯)
कुलज्ञोऽप्यूर्द्ध्वविख्याते ज्ञानं तत्तदनुत्तमम् ॥
कुलशास्त्राणि सर्वाणि मयैवोक्तानि पार्वति ! । (১৬০)
प्रमाणानि न सन्देहो न हन्तव्यानि हेतुभिः ॥
देवताभ्यः पितृभ्यश्च मधुवाता ऋतायते । (১৬১)
स्वाधिष्ठानमधिष्ठायां क्षीरं सर्पिर्मधूदकम् ॥
हिरण्यपात्रं खादित्वा चाबध्नन् पुरुषं पशुम् । (১৬২)
सद्यो दीक्षयतोत्याद्याः प्रमाणं श्रुतयः प्रिये ! ॥
इत्येतत् कथितं किञ्चित् कुलमाहात्म्यमम्बिके ! । (১৬৩)

समासेन कुलेशानि ! किं भूयः श्रोतुमिच्छसि ॥

इति कुलार्णवे महारहस्ये सर्वागमोत्तमोत्तमे कुलमाहात्म्यकथनं नाम द्वितीय उल्लासः ।

---

## तृतीय उल्लासः ।

श्रीदेव्युवाच । कुलेश ! श्रोतुमिच्छामि सर्वधर्मोत्तमोत्तमम् ।
ऊर्द्ध्वाम्नायस्य माहात्म्यं तन्मन्त्रं वद मे प्रभो ! ॥
ईश्वर उवाच । शृणु देवि ! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण देवता सुप्रसीदति ॥
न कदाचिन्मया प्रोक्तं इतः पूर्वं कुलेश्वरि ! ।
कथयामि तव स्नेहादूर्द्ध्वाम्नायं शृणु प्रिये ! ॥
वेदशास्त्रपुराणानि प्रकाश्यानि कुलेश्वरि ! ।
शैवाचारागमाः सर्वे रहस्याः परिकीर्त्तिताः ॥
रहस्यातिरहस्यानि कुलशास्त्राणि पार्वति ! ।
रहस्यातिरहस्यानां रहस्यमिदमम्बिके ! ॥
ऊर्द्ध्वाम्नायञ्च तं वेद्मि पूजाहन्तात्मकं परम् ।
ऊर्द्ध्वाम्नायार्थतत्त्वं हि इति वा पाठः ॥
सुगोपितं मया यत्नादिदानीन्तु प्रकाश्यते ।
मम पञ्चमुखेभ्यश्च पञ्चाम्नायाः समुद्गताः ॥
पूर्वश्च पश्चिमश्चैव दक्षिणश्चोत्तरस्तथा ।
ऊर्द्ध्वाम्नायाश्च पञ्चैते मोक्षमार्गाः प्रकीर्त्तिताः ॥
आम्नाया बहवः सन्ति नोर्द्ध्वाम्नायस्य ते समाः ।
सत्यमेतद्वरारोहे ! नात्र कार्य्या विचारणा ॥
आम्नाया बहवो गुप्ताश्चतुराम्नायभेदजाः ।
अस्मिंस्तन्त्रे समाख्याताः पूर्वत्र कुलनायिके ! ॥
उत्तराम्नायवेत्तारो बहवः सन्ति मानिनः ।

ऊर्द्ध्वाम्नायात्मतत्त्वज्ञा विरला वीरवन्दिते !॥
यावन्तः पांशवो भूमेस्तावन्तः समुदीरिताः।
एकैकाम्नायजा मन्त्रा भुक्तिमुक्तिफलप्रदाः॥
उपमन्त्राश्च तावन्तः सारदाः समुदीरिताः।
मयैव कथितास्ते तु लोकानुग्रहकाङ्क्षया॥
सर्वेषामपि मन्त्राणां देवतास्तत्फलप्रदाः।
आवयोरंशसम्भूताः समुद्दिष्टाः शुचिस्मिते !॥
सर्वमन्त्रानहं वेद्मि नान्यो जानाति कश्चन।
मत्प्रसादेन यः कश्चिद्वेत्ति मानवकोटिषु॥
एकाम्नायञ्च यो वेत्ति स मुक्तो नात्र संशयः।
किं पुनश्चतुराम्नायवेत्ता साक्षाच्छिवो भवेत्॥
चतुराम्नायविज्ञानादूर्द्ध्वाम्नायः परः प्रिये !।
तस्मात्तदेव जानीयाद् यदीच्छेत् सिद्धिमात्मनः॥
ऊर्द्ध्वत्वात् सर्वधर्माणां ऊर्द्ध्वाम्नायः प्रशस्यते।
ऊर्द्ध्वं नयत्यधःस्थञ्चेदूर्द्ध्वाम्नाय इति स्मृतः॥
ऊर्द्ध्वतत्त्वात् कुलेशानि ! ध्वस्तसंसारसागरात्।
ऊर्द्ध्वलोकनिषेव्यत्वादूर्द्ध्वाम्नाय इति स्मृतः॥
तस्माद्देवेशि ! जानीहि साक्षान्मोक्षैकसाधनम्।
सर्वाम्नायाधिकफलमूर्द्ध्वाम्नायं परात्परम्॥
तस्माद्देवेशि ! जानीहि साक्षान्मोक्षैकसाधनम्।
सर्वलोकेषु सर्वेभ्यो ह्यहं पूज्यो यथा प्रिये !॥
आम्नायेषु च सर्वेषु ऊर्द्ध्वाम्नायस्तथा प्रिये !।
देवतानां यथा विष्णुर्ज्योतिषां भास्करो यथा॥
तीर्थानाञ्च यथा काशी स्वर्णदी सरितां यथा।
पर्वतानां यथा मेरुस्तरूणां चन्दनं यथा॥
अश्वमेधः क्रतूनाञ्च पाषाणानां यथा मणिः।

यथा रसानां माधुर्यं धातूनां काञ्चनं यथा ॥
चतुष्पदां यथा धेनुर्यथा हंसस्तु पक्षिणाम् ।
आश्रमाणां यथा भिक्षुर्वर्णानां ब्राह्मणो यथा ॥
मनुष्याणां यथा राजाऽवयवानां यथा शिरः ।
आमोदानाञ्च कस्तूरी यथा काञ्चीपुरी पुराम् ॥
तथैव सर्वधर्माणां ऊर्द्ध्वाम्नायोऽधिकः प्रिये ! ।
नानाजन्मार्जितापारपुण्यकर्मफलोदयात् ॥
ऊर्द्ध्वाम्नायं विजानीयान्नान्यथा वीरवन्दिते ! ।
धन्यो मनुष्यलक्षेषु जानाति कुलसाधनम् ॥
तेषां लक्षेषु यः कश्चिदूर्द्ध्वाम्नायं प्रवेत्ति च ।
न वेदैर्नागमैः शास्त्रैर्न पुराणैः सुविस्तरैः ॥
न यज्ञैर्न तपोभिर्वा न तीर्थव्रतकोटिभिः ।
अन्यैरुपायैर्देवेशि ! मन्त्रौषधिपुरःसरैः ॥
आम्नायो ज्ञायते चोर्द्ध्वः श्रीमद्गुरुमुखं विना ।
विधातव्यस्त्वया देव्या सततञ्च पुनः स्वयम् ॥
तमेवान्वेषयेत्तत्र सर्वज्ञं करुणानिधिम् ।
आम्नायं यो नरो देवि ! विजानाति च तत्त्वतः ॥
सर्वलक्षणसम्पूर्ण ऊर्द्ध्वाम्नायात्मकोविदः ।
तस्माद्देवेशि ! जानीयादूर्द्ध्वाम्नायं कुलेश्वरि ! ॥
लभते काङ्क्षितां सिद्धिं सत्यं सत्यं वरानने ! ।
ऊर्द्ध्वाम्नायं विजानाति यः कश्चित् श्रीगुरोर्मुखात् ॥
शास्त्रमार्गेणैव नरोजीवन्मुक्तो न संशयः ।
आम्नायं यो नरो देवि ! विजानाति च तत्त्वतः ॥
स वन्द्यः सद्गुरुः सोऽर्च्यः स देवज्ञः स मान्त्रिकः ।
स सेव्यः स च संस्तुत्यः स द्रष्टव्यः स सात्त्विकः ॥
स व्रती स तपस्वी च सोऽनुष्ठाता स पूजकः ।

स वेदागमशास्त्रादिसर्वविद्याविशारदः ॥
स आचार्य्यः स मतिमान् स यतिः स च कौलिकः ।
स यज्वा स च पूतात्मा स जापी स च साधकः ॥
स योगी सङ्गतार्थस्तु स वीरः स च सत्तमः ।
स पुण्यात्मा स सर्वज्ञः स मुक्तः स शिवः प्रिये ! ॥
तत्कुलं पावनं देवि ! धन्या तज्जननी स्मृता ।
तत्पिता च कृतार्थः स्यात्सुतास्तत्पितरः प्रिये ! ॥
पुण्यास्तद्वंशजाः सर्वे पूतास्तन्मित्रबान्धवाः ।
बहुनेह किमुक्तेन ऊर्द्ध्वाम्नायपरस्य च ॥
स्मरणं कीर्त्तनं वापि दर्शनं स्पर्शनं तथा ।
सम्भाषणञ्च कुरुते राजसूयाधिकं फलम् ॥
स यत्र वसते देवि ! तत्र श्रीर्विजयो भवेत् ।
अनामयं सुभिक्षञ्च सुवृष्टिर्निरुपद्रवम् ॥
तस्माद्गुरुप्रसादेन ऊर्द्ध्वाम्नायं नरोत्तमः ।
यो वेत्ति तत्त्वतो देवि ! स मे प्रियतमो भवेत् ॥
पूर्व्वाम्नायः सृष्टिरूपः स्थितिरूपश्च दक्षिणः ।
संहारः पश्चिमो देवि ! उत्तरोऽनुग्रहो भवेत् ॥
मन्त्रयोगं विदुः पूर्वं भक्तियोगञ्च दक्षिणम् ।
पश्चिमं कर्मयोगञ्च ज्ञानयोगं तथोत्तरम् ॥
पूर्व्वाम्नायस्य सङ्केतश्चतुर्विंशतिरीरितः ।
दक्षिणाम्नायसङ्केतः पञ्चविंशतिरीरितः ॥
पश्चिमाम्नायसङ्केतो द्वाविंशत् समुदाहृतः ।
उत्तराम्नायसङ्केतः षट्त्रिंशत् समुदाहृतः ॥
ऊर्द्ध्वाम्नायस्य चैतानि वसन्ति कुलनायिके ! ।
साक्षाज्ज्ञानस्वरूपत्वात् न किञ्चित् कर्म विद्यते ॥
ऊर्द्ध्वाम्नायस्य माहात्म्यमहं वेद्मि न चापरः ।

मत्स्नेहात्त्वञ्च जानासि सत्यमेतद्वरानने ! ॥
ऊर्द्ध्वाम्नायस्य माहात्म्यमिति ते कथितं मया ।
समासेन कुलेशानि ! मन्त्रमाहात्म्यमुत्तमम् ॥
इतः पूर्वं मया नोक्तं यस्य कस्यापि पार्वति ! ।
तद्वदामि तव स्नेहाच्छृणु मत्प्राणवल्लभे ! ॥
श्रीप्रासादपरामन्त्रमूर्द्ध्वाम्नायमधिष्ठितम् ।
आवयोः परमाकारं यो वेत्ति स स्वयं शिवः ॥
शिवादिक्रिमिपर्य्यन्तं प्राणिनां प्राणवर्त्मना ।
निश्वासोच्छ्वासरूपेण मन्त्रोऽयं वर्त्तते प्रिये ! ॥
अनिलेन विना मेघो यथाकाशे न चेष्टते ।
पराप्रासादमन्त्रेण विनालोकस्तथा प्रिये ! ॥
पराप्रासादमन्त्रेण सूतमेतच्चराचरम् ।
अभिन्नं तत्त्वतो देवि ! तालवृन्ते यथानिलः ॥
वीजेऽङ्कुरस्तिले तैलं अग्नावुष्णं रवौ प्रभा ।
चन्द्रे ज्योत्स्नानलः काष्ठे पुष्पे गन्धो जले द्रवः ॥
शब्दे चार्थः शिवे शक्तिः क्षीरे सर्पिः फले रुचिः ।
शर्करायाश्च माधुर्य्यं घनसारे च शीतलम् ॥
निग्रहानुग्रहौ मन्त्रे प्रतिमायाञ्च देवता ।
दर्पणे प्रतिबिम्बञ्च समीरे चलनं यथा ॥
पराप्रासादमन्त्रेऽपि प्रपञ्चोऽयं तथा स्थितः ।
वटवीजे यथा वृक्षः सूक्ष्मरूपेण तिष्ठति ॥
पराप्रासादमन्त्रेऽस्मिन् ब्रह्माण्डोऽपि तथा स्थितः ।
सुपक्वेषु यथान्नेषु सरसेषु कुलेश्वरि ! ॥
लवणेन विना स्वादु यथा भोक्तुं न जायते ।
पराप्रासादमन्त्रेण ये वा मन्त्रा न सङ्गताः ॥
ते फलं न प्रयच्छन्ति मन्त्रशक्तिविवर्जिताः ।

श्रीप्रासादपरामन्त्रो गोपनीयः कुलेश्वरि ! ॥ ५३
विचार्य्याहं पुराणानि दर्शनाम्नायभेदजान्।
समग्रान् वेद्म्यहं मन्त्रान् शास्त्राणि विविधानि च ॥ ५४
सहस्राक्षादयो देवाः शास्त्रेषु विविधेषु च।
भ्रमन्ति तेषु मूढ़ास्ते तव मायाविमोहिताः ॥ ५५
जायन्ते च म्रियन्ते च संसारक्लेशभागिनः।
श्रीप्रासादपरामन्त्रं न गायन्तः कुलेश्वरि ! ॥ ५६
न लभन्ते हि मोक्षं ते त्वत्प्रसादविवर्जिताः।
मद्रूपे श्रीगुरौ यस्य दृढ़ा भक्तिः प्रजायते ॥ ५७
श्रीप्रासादपरामन्त्रं स ज्ञात्वा परिमुच्यते।
पूर्वजन्मसहस्रेषु शैवादिसमयोद्यतान् ॥ ५८
चतुराम्नायजान् मन्त्रान् गुर्वाज्ञां यो भजिष्यति।
स पापकञ्चुकान्मुक्तः शुद्धात्मा गुरुवत्सलः ॥ ५९
श्रीप्रासादपरामन्त्रं विजानाति च नान्यथा।
सब्रह्मविष्णुरुद्राश्च शक्रादिसुरपुङ्गवाः ॥ ६०
वसुरुद्राश्च दिक्पाला मनुचन्द्रादयः प्रिये !।
मार्कण्डेयादिमुनयो वशिष्ठादिमुनीश्वराः ॥ ६१
सनकाद्याश्च योगीशा जीवन्मुक्ताः शुकादयः।
यक्षाः किन्नरगन्धर्वसिद्धविद्याधरादयः ॥ ६२
श्रीप्रासादपरामन्त्रप्रभवश्चामितं फलम्।
प्राप्य मन्त्रमिमं पुण्यं जपन्त्यद्यापि पार्वति ! ॥ ६३
सामर्थ्यं पूजिता विद्या तेजः सौख्यमरोगिता।
राज्यं स्वर्गश्च मोक्षश्च पराप्रासादजापिनः ॥ ६४
रुद्रेन्दुब्रह्मविष्णूनामभिभूयाय ते पदम्।
सर्वकर्मविहीनोऽपि पराप्रासादमन्त्रवित् ॥ ६५
सुखेन यां गतिं यान्ति न तां सर्वेऽपि धार्मिकाः।

तस्य चिन्तामणिः कामधेनुः कल्पतरुर्गृहे ॥
कुबेरः किङ्करः साक्षात् पराप्रासादजापिनः ।
यथा दिव्यरसस्पर्शाल्लोहो भवति काञ्चनः ॥
पराप्रासादजापी यः पशुः पशुपतिर्भवेत् ।
श्रीप्रासादपरामन्त्रं यो विजानाति भावतः ॥
स मां त्वाञ्च विजानाति चावयोरप्यतिप्रियः ।
पराप्रासादमन्त्रज्ञः श्वपचोऽपि हि पार्वति ! ॥
देवतास्थापने शक्तः प्रतिमादौ न संशयः ।
मन्त्रमात्रन्तु यो वेत्ति पराप्रासादसंज्ञकम् ॥
श्वपचोऽपि हि मुच्येत किं पुनस्तद्विधानवित् ।
पराप्रासादमन्त्रज्ञो यत्करोति यदिच्छति ॥
यद्ब्रूते तन्महेशानि ! तपो ध्यानं जपो भवेत् ।
दीक्षापूर्वं महेशानि ! पारम्पर्य्यसमन्वितः ॥
पराप्रासादमन्त्रं यो वेत्ति सोऽहं न संशयः ।
चराचरसमेतानि भुवनानि चतुर्दश ॥
पराप्रासादमन्त्रज्ञदेहे तिष्ठन्ति नित्यशः ।
पराप्रासादमन्त्रज्ञो यत्र तिष्ठति भाविनि ! ॥
दिव्यक्षेत्रं समुद्दिष्टं समन्ताद्दशयोजनम् ।
पराप्रासादमन्त्रार्थतत्त्वज्ञं कुलनायिके ! ॥
सुरासुराश्च वदन्ति किं पुनर्मानवादयः ।
पराप्रासादमन्त्रज्ञमनुतिष्ठति पार्वति ! ॥
सिद्धक्षेत्रं मदीयं वा मुनिदेवगणैः सह ।
सौरवैष्णवदौर्गार्कगाणपत्येन्दुसम्भवान् ॥
सर्वमन्त्रान् स जानाति पराप्रासादमन्त्रवित् ।
श्रीप्रासादपरामन्त्रो जिह्वाग्रे यस्य वर्त्तते ॥
तस्य दर्शनमात्रेण श्वपचोऽपि विमुच्यते ।

ब्राह्मणो वान्त्यजो वापि शुचिर्वाप्यथवाऽशुचिः ॥
पराप्रासादजापी यः स मुक्तो नात्र संशयः ।
गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ॥
पराप्रासादमन्त्रोऽयं देवेशि ! न च निष्फलः ।
चिरेणैकैकफलदा मन्त्राः सन्ति सहस्रशः ॥
कुलेशि ! मन्त्रराजोऽयं शीघ्रं सर्वफलप्रदः ।
पराप्रासादमन्त्रोऽयं सर्वमन्त्रोत्तमोत्तमः ॥
ज्ञानतोऽज्ञानतो वापि भजतां कामदो मनुः ।
शचीन्द्रौ रोहिणीचन्द्रौ स्वाहाग्नी च प्रभारवी ॥
लक्ष्मीनारायणौ वाणीधातारौ रात्रिवासरौ ।
अग्नीषोमौ विन्दुनादौ देवि ! प्रकृतिपूरुषौ ॥
आधाराधेयनामानौ भोगमोक्षौ कुलेश्वरि ! ।
प्राणापानौ च शब्दार्थौ प्रियौ विधिनिषेधकौ ॥
सुखदुःखादि यद्द्वन्द्वं दृश्यते श्रूयते यथा ।
सर्वलोकेषु तत्सर्वमावामेव न संशयः ॥
पुंस्त्रीरूपाणि सर्वाणि चावयोरंशजानि हि ।
पराप्रासादमन्त्रोऽयं तस्मात् सर्वात्मको भवेत् ॥
अरूपं भावनागम्यं परं ब्रह्म कुलेश्वरि ! ।
निष्फलं निर्मलं नित्यं निर्गुणं व्योमसन्निभम् ॥
अनन्तममलं तत्त्वं मनोवाचामगोचरम् ।
पराप्रासादमन्त्रार्थं सन्ध्यानात् सम्प्रकाशते ॥
तस्मान्मन्त्रमिमं देवि ! पराप्रासादसंज्ञकम् ।
परतत्त्वस्वरूपत्वात् सच्चिदानन्दलक्षणात् ॥
शिवशक्तिमयत्वाच्च भुक्तिमुक्तिप्रदानतः ।
सकर्मापि च निष्कर्म सगुणञ्चापि निर्गुणम् ॥
श्रीप्रासादपरामन्त्रं सर्वमन्त्रशिरोमणिम् ।

जपन् भुक्तिञ्च मुक्तिञ्च लभते नात्र संशयः ॥
बहुनात्र किमुक्तेन सर्वसारं शृणु प्रिये ! ।
श्रीप्रासादपरामन्त्रसमो मन्त्रो न विद्यते ॥
इदमेव परं ज्ञानमिदमेव परं तपः ।
इदमेव परं ध्यानमिदमेव परार्च्चनम् ॥
इदमेव परा दीक्षा इदमेव परो जपः ।
इदमेव परंब्रह्म इदमेव परं व्रतम् ॥
इदमेव परो यज्ञ इदमेव पराध्वरम् ।
इदमेव परं श्रेय इदमेव परं फलम् ॥
इदमेव परं तत्त्वं इदमेव परा गतिः ।
इदमेव परं गुह्यं सत्यं सत्यं न संशयः ॥
इति मत्वा मनुवरं यत्निष्ठः स्यात् सदा प्रिये ! ।
आगमोक्तेन विधिना क्रमपूजापुरःसरम् ॥
श्रीप्रासादपरामन्त्रं शतमष्टोत्तरं जपेत् ।
मुच्यते ब्रह्महत्यादिमहापापैश्च पञ्चभिः ॥
द्विशतं यो जपेद्देवि ! श्रीप्रासादपरामनुम् ।
चतुर्विंशतिलक्षांशधारणाचरितैरपि ॥
अयोनिजाङ्गचरितैरसंख्यजननार्जितैः ।
वार्द्धके यौवने बाल्ये जाग्रत्स्वप्नसुषुप्तिषु ॥
कर्मणा मनसा वाचा ज्ञानाज्ञानकृतैरपि ।
महापातकसङ्घैश्च उपपातककोटिभिः ॥
मुच्यते नात्र सन्देहः सत्यमेतद्वरानने ! ।
त्रिशतं यो जपेद्देवि ! श्रीप्रासादपरामनुम् ॥
सर्वक्रतुषु यत्पुण्यं सर्वदानेषु यत् फलम् ।
सर्वव्रतेषु यत्पुण्यं सर्वतीर्थेषु यत् फलम् ॥
तत् फलं लभते देवि ! नात्र कार्य्या विचारणा ।

चतुःशतं जपेद्यस्तु श्रीप्रासादपरामनुम् ॥
सदा तस्य गृहद्वार्य्यणिमाद्यष्टसिद्धयः।
वसन्ते नात्र सन्देहः सर्वसिद्धिसमन्विताः ॥
यद्यन्मनोऽभिलषितं तत्तदाप्नोति नित्यशः।
धर्मार्थकाममोक्षाश्च साक्षात्तस्य करे स्थिताः ॥
सालोक्यप्रमुखां देवि ! लभेन्मुक्तिं चतुर्विधाम्।
सत्यमेतन्न सन्देहः साधकः कुलनायिके ! ॥
जपेत् पञ्चशतं यस्तु श्रीप्रासादपरामनुम्।
तत् फलं नैव शक्नोमि कथितु कुलनायिके !।
तस्मात् सर्वप्रयत्नेन सर्वावस्थासु सर्वदा ॥
श्रीप्रासादपरामन्त्रं जपेद्भुक्तिविमुक्तये।
नास्ति गुर्वधिकं तत्त्वं न शिवाधिकदैवतम् ॥
न हि वेदाधिका विद्या न कौलसमदर्शनम्।
न कुलज्ञाधिको ज्ञानी न हि ज्ञानाधिकं सुखम ॥
नाष्टाङ्गा चाधिका पूजा न हि मोक्षाधिकं फलम्।
श्रीप्रासादपरामन्त्रादधिकं नैव विद्यते ॥
इदं सत्यमिदं सत्यं सत्यं सत्यं न संशयः।
श्रीप्रासादपरामन्त्रमाहात्म्यमिह वर्णितुम् ॥
न शक्नोमि वरारोहे ! कल्पकोटिशतैरपि।
गिरौ सर्षपमात्रन्तु सागरे बालुकानि च ॥
तथापि मन्त्रमाहात्म्यं किञ्चित्ते कथितं मया।
ऊर्द्ध्वाम्नायस्य माहात्म्यं श्रीप्रासादपरामनोः ॥
इति ते कथितं देवि ! किं भूयः श्रोतुमिच्छसि ॥

इति कुलार्णवे महारहस्ये श्रीप्रासादपरामन्त्रकथनं नाम तृतीय उल्लासः।

# चतुर्थ उल्लासः ।

देव्युवाच । कुलेश ! श्रोतुमिच्छामि श्रीप्रासादपरामनुम् ।
मन्त्रराजं वदेशान ! न्यासध्यानादिभिः सह ॥
ईश्वर उवाच । शृणु देवि ! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण शिवाकारः प्रजायते ॥
इतः पूर्वं मया नोक्तो मन्त्रोऽयं यस्य कस्यचित् ।
तव स्नेहाद्वदाम्यद्य शृणु मत्प्राणवल्लभे ! ॥
अनन्तचन्द्रभुवनसिन्दुविन्दुयुगान्वितः ।
श्रीप्रासादपरामन्त्रो भुक्तिमुक्तिफलप्रदः ॥
पराप्रासादमन्त्रस्तु सादिरुक्तः कुलेश्वरि ! ।
प्रकाशानन्दरूपत्वात् प्रत्यक्षफलदानतः ॥
प्रसन्नचित्तवश्यत्वात् प्रसिद्धार्थनिरूपणात् ।
प्राक्तनाघप्रशमनात् प्रपन्नार्त्तिविनाशनात् ॥
प्रासादकरणात् शीघ्रात् प्रासादमनुरीरितः ।
परतत्त्वस्वरूपत्वात् परमात्मप्रकाशनात् ॥
परमानन्दजननात् परमैश्वर्य्यकारणात् ।
परोक्षफलदानाच्च परधर्मनिदर्शनात् ॥
परत्वात् सर्वमन्त्राणां परामन्त्र इतीरितः ।
कुलमन्त्रमिदं देवि ! न्यासं शृणु वरानने ! ॥
अथ प्रातः समुत्थाय गुरुदेवानुचिन्तनम् ।
सकृन्मूलेन स्मृत्वा च कुर्य्याद्विण्मूत्रमोचनम् ॥
शौचस्य शोधनं स्नानं सन्ध्यातर्पणमाचरेत् ।
एकान्ते द्वारयजनं विघ्नत्रयविनाशनम् ॥
पूजास्थानप्रवेशश्च तथा समुपवेशनम् ।
देवीपूजाग्रतो ध्यानं शिवादिगुरुवन्दनम् ॥
आसनं गणपतिक्षेत्रपालवन्दनमीश्वरि ! ।

पादुकास्मरणञ्चैव दीपनाथार्चनं प्रिये ! ॥
कराङ्गशोधनं प्राणायामः सब्रह्मरन्ध्रके ।
दिग्बन्धनं चाङ्गयुग्मं वीजमुक्ताञ्च मातृकाम् ॥
दशप्रकारभूताख्यां लिपिं कमठसंज्ञकाम् ।
ऋषिरस्य परः शम्भुश्छन्दश्चाव्यक्तपूर्विका ॥
गायत्री देवता यत्र सर्वमन्त्रेश्वरी परा ।
दीर्घत्रययुतं मूलं वीजशक्त्या च कीलकम् ॥
षड्दीर्घमूलयुक्तेन षड़ङ्गानि च पार्वति ! ।
ईशतत्पुरुषाघोरसद्योजातात्मनस्तथा ॥
पञ्चाङ्गुलिषु विन्यस्य मूर्त्तिं वक्त्रेषु वर्जयेत् ।
पञ्चधा ब्रह्मणि तथैवाङ्गुलिन्यासमाचरेत् ॥
आधारशक्तिमारभ्य पीठमन्त्रान्तमम्बिके ! ।
अस्य षोढ़ां महेशानि ! कुर्य्यात् पूर्वोक्तवर्त्मना ॥
महाषोढ़ाह्वयं न्यासं ततः कुर्य्यात् समाहितः ।
वक्ष्यमाणेन विधिना देवताभावसिद्धये ॥
यस्य तस्य न वक्तव्यं तव स्नेहाद्वदाम्यहम् ।
प्रपञ्चो भुवनं मूर्त्तिर्मन्त्रदैवतमातरः ॥
महाषोढ़ाह्वयं न्यासं सर्वन्यासोत्तमोत्तमम् ।
तत्रादौ परमेशानि ! प्रपञ्चन्यास उच्यते ॥
प्रपञ्चद्वीपजलधिगिरिपत्तनपीठकाः ।
क्षेत्रं वनाश्रमगुहानदीचत्वरकोद्भिदः ॥
स्वेदजाण्डजजरायुजा इत्युक्तास्ते हि षोड़श ।
श्रीर्माया कमला विष्णुवल्लभा पद्मधारिणी ॥
समुद्रतनया लोकमाता कमलवासिनी ।
इन्दिरा मा रमा लक्ष्मीस्तथा नारायणप्रिया ॥
सिद्धिर्लक्ष्मीराजलक्ष्मी महालक्ष्मीरितीरिता ।

शक्तयस्तु प्रपञ्चानां स्वराणामधिदेवताः ॥
लवस्त्रुटिः कला काष्ठा निमेषः श्वास एव हि ।
घटिका च मुहूर्त्तश्च प्रहरो दिवसस्तथा ॥
सन्ध्या रात्रिस्तिथिश्चैव वारो नक्षत्रमेव च ।
योगश्च करणं पक्षौ मासो राशिर्ऋतुस्तथा ॥
अयनं वत्सरयुगप्रलयाः पञ्चविंशतिः ।
एतेषां स्थाननियमो हृदयान्तः समीरितः ॥
आर्य्योमा चण्डिका दुर्गा शिवापर्णाम्बिका सती ।
ईश्वरी शाम्भवीशानी पार्वती सर्वमङ्गला ॥
दाक्षायणी हैमवती महामाया महेश्वरी ।
मृड़ानी चैव रुद्राणी सर्वाणी परमेश्वरी ॥
काली कात्यायनी गौरी भवानीति समीरिता ।
एतेषां स्थाननियमो हृदयान्तः समीरितः ॥
शक्तयः स्पर्शवादीनां स्पर्शानामधिदेवताः ।
पञ्चभूतानि तन्मात्रं ज्ञानकर्मेन्द्रियाणि च ॥
गुणान्तःकरणावस्था धत्ते दोषो दशेरिताः ।
ब्राह्मी वागीश्वरी वाणी सावित्री च सरस्वती ॥
गायत्री वाक्प्रदा पश्चात् सारदा भारती प्रिये !
विद्यात्मिकाः पञ्चभूतव्यापकानामधीश्वरीः ॥
वाग्भवं भुवनेशीञ्च लक्ष्मीवीजं त्रितारकम् ।
त्रितारमूलमन्त्रान्ते मातृकाक्षरतः परम् ॥
वदेत् प्रपञ्चरूपायै श्रियै नम इति क्रमात् ।
प्रपञ्चादिभिराद्यन्ते वर्णान् शक्तीर्नियोजयेत् ॥
मातृकान्यासः सम्प्रोक्तः स्थानेष्वेवं न्यसेत् प्रिये ! ।
त्रितारमूलसकलप्रपञ्चादिस्वरूपतः ॥
आर्य्यै पराम्बादेव्यै नम उक्ता व्यापकं न्यसेत् ।

प्रपञ्चन्यास एव स्याद् भुवनन्यासमाचरेत्॥
त्रितारमूलमन्त्रान्ते अं आं इं अतलं वदेत्।
लोकस्य निलयश्चैव शतकोटिपदं ततः॥
गुह्याख्यायोगिनीमूलदेवतान्तं वदेत् प्रिये!।
वदेदाधारशक्तिं वा देव्यै तत्पादयोर्न्यसेत्॥
ईंमूलं वितलं गुह्यतरं चानन्तसंज्ञकम्।
शेषञ्च पूर्ववत् प्रोच्य गुल्फयोर्विन्यसेत् प्रिये!॥
ऋं ॠं लृं सुतलं चातिगुह्यं चाचिन्त्यसंज्ञकम्।
शेषञ्च पूर्ववत् प्रोच्य जङ्घयोर्विन्यसेत् प्रिये!॥
ॡं एं ऐं महातलञ्च महागुह्यं पदन्ततः स्वतन्त्रकम्।
शेषञ्च पूर्ववत् प्रोच्य जानुनोर्विन्यसेत् प्रिये!॥
ओं औं तलातलं देवि! परमगुह्याभिधानकम्।
शेषञ्च पूर्ववत् प्रोच्य ऊर्वोर्देवेशि! विन्यसेत्॥
अं अः रसातलञ्चैव रहस्यं ज्ञानसंज्ञकम्।
शेषञ्च पूर्ववत् प्रोच्य गुह्यदेशे प्रविन्यसेत्॥
कवर्गेणापि पातालं लोकेति निलयेति च।
रहस्यं नितरां क्रियां गुह्यदेशे प्रविन्यसेत्॥
शेषञ्च पूर्ववत् प्रोच्य आधारे विन्यसेत् प्रिये!।
चवर्गं भूरहस्यातिरहस्यं डाकिनीमपि॥
शेषञ्च पूर्ववत् प्रोच्य स्वाधिष्ठाने न्यसेत् प्रिये!।
टवर्गेण च भुवो महारहस्यं राकिणीमपि॥
शेषञ्च पूर्ववत् प्रोच्य नाभौ च विन्यसेत् प्रिये!।
तवर्गं स्वश्च परमरहस्यं लाकिनीमपि॥
शेषञ्च पूर्ववत् प्रोच्य हृदये विन्यसेत् प्रिये!।
पवर्गञ्च महागुह्यरहस्यं काकिनीमपि॥
शेषञ्च पूर्ववत् प्रोच्य तालुमूले न्यसेत् प्रिये!।

यवर्गञ्च जनो गुप्ततरञ्च शाकिनीमपि ॥
शेषञ्च पूर्ववत् प्रोच्य आज्ञायाञ्च न्यसेत् प्रिये ! ।
शवर्गञ्च तपश्चातिगुह्यञ्च हाकिनीमपि ॥
शेषञ्च पूर्ववत् प्रोच्य ललाटे विन्यसेत् प्रिये ! ।
लक्ष्यं सत्यं महागुह्यं याकिनीमपि च प्रिये ! ॥
शेषञ्च पूर्ववत् प्रोच्य ब्रह्मरन्ध्रे च विन्यसेत् ।
त्रितारमूलमन्त्रान्ते चतुर्दशभुवं वदेत् ॥
नाधिपायै श्रीपराम्बादेव्यै च व्यापकं न्यसेत् ।
कृत्वैवं भुवनन्यासं मूर्त्तिन्यासमथाचरेत् ॥
केशवनारायणमाधवगोविन्दविष्णवः ।
मधुसूदनसंज्ञश्च स्यात्त्रिविक्रमवामनौ ॥
श्रीधरश्च हृषीकेशः पद्मनाभो दामोदरः ।
वासुदेवश्च सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ॥
अत्रोल्केन्द्राणी चेशानी चोग्रार्द्धनयना तथा ।
फट्जिश्च रूपिणी मूका नूनदोषैकनायिका ॥
ऐङ्कारिणी चौश्चवती सर्वकामाञ्जनप्रभा ।
अस्थिमालाधरा चेति सम्प्रोक्ताः स्वरदेवताः ॥
भवः शर्वोऽथ रुद्रश्च पशुपतिश्चोग्र एव च ।
महादेवस्तथा भीम ईशानस्तत्पुरुषाह्वयः ॥
अघोरसद्योजातौ च वामदेव इतीरितः ।
कामद्रा खगचला गरिमादिफलप्रदा ॥
छन्दोमयी जगत्स्थाना ज्वलत्तारा ततः परम् ।
ज्ञानदा च टङ्कधरा तथा टङ्कृतिरीरिता ॥
कभादीनाञ्च डान्तानां वर्णानां देवतास्त्विमाः ।
ब्रह्मा प्रजापतिर्वेधा परमेष्ठी पितामहः ॥
विधाता च विरिञ्चिश्च स्रष्टा च चतुराननः ।

हिरण्यगर्भ इत्युक्ताः क्रमाद् ब्रह्मादयो दश ।
यक्षिणी रञ्जिनी लक्ष्मीर्वज्रिणी शशिधारिणी ॥
षड़ाधारलया सर्वनायिका हसितानना ।
ललिता च क्षमा चेति प्रोक्तास्ताल्वन्तदेवताः ॥
त्रितारमूलमन्त्रान्ते स्वरान् विष्णून् सशक्तिकान् ।
चतुर्थ्या नमसा युक्तान् मस्तके चानने न्यसेत् ॥
सस्कन्धपार्श्वकण्ठोरुजानुजङ्घापदेषु च ।
दक्षादिवामपर्य्यन्तं विन्यसेत् परमेश्वरि ! ॥
फड़ाद्यन्तयुतान्मन्त्री भवादीन् शक्तिसंयुतान् ।
पादपार्श्वबाहुकण्ठपञ्चवक्त्रे षु विन्यसेत् ॥
दशस्थानेषु ब्रह्मादीन् आदिशक्तियुतान्न्यसेत् ।
त्रितारमूलमन्त्रान्ते श्रीत्रिमूर्त्त्यात्मिकां वदेत् ॥
आर्य्यै पराम्बादेव्यै च नमसा व्यापकं न्यसेत् ।
मूर्त्तिन्यासं विधायेत्थं मन्त्रन्यासमथाचरेत् ॥
त्रितारमूलमन्त्रान्ते एकलक्षञ्च कोटि च ।
भेदश्च प्रणवाद्येकाक्षरात्माखिलमन्त्रतः ॥
ततोऽधिदेवतायै स्यात् सकलञ्च फलप्रदा ।
आर्य्यै तथैककूटैश्वर्य्याम्बादेव्यै नमो वदेदिति ॥
ईं उं ऊं द्व्यादि हंसादि द्विकूटं पूर्ववत् परम् ।
ऋं ॠं लृं त्र्यादिकूटं पूर्ववत् परम् ॥
ॡं एं ऐं चतुर्लक्षं चन्द्रादि पूर्ववत् परम् ।
ओं औं अं अः पञ्चलक्षं सूर्य्यादि पूर्ववत् परम् ॥
कं खं गं चैव षड़्लक्षं स्कन्दादि पूर्ववत् परम् ।
घं ङं चं सप्तलक्षं गणेशादि पूर्ववत् परम् ॥
छं जं झं अष्टलक्षं वटुकादि पूर्ववत् परम् ।
ञं टं ठं नवलक्षं शिवादि पूर्ववत् परम् ॥

डं ढं णं दशदलञ्च विष्ण्वादि पूर्ववत् परम् ।
तं थं दं एकादशदलञ्च रुद्रादि पूर्ववत् परम् ॥
धं नं पं द्वादशदलञ्च वाण्यादि पूर्ववत् परम् ।
फं बं भं त्रयोदशदलञ्च लक्ष्म्यादि पूर्ववत् परम् ॥
मं यं रं चतुर्दशदलञ्च गौर्य्यादि पूर्ववत् परम् ।
लं वं शं पञ्चदशदलञ्च दुर्गादि पूर्ववत् परम् ॥
षं सं हं षोड़शदलञ्च त्रिपुरादि च षोड़श ।
चरात्माखिलमन्त्राधिदेवतायै सकलं ततः ॥
तथा फलप्रदायै च षोड़श ईश्वरी पुनः ।
अम्बादेव्यै नमः प्रोक्तो मन्त्रन्यासो महेश्वरि ! ॥
आधारलिङ्गयोर्नाभिहृत्कण्ठेषु च विन्यसेत् ।
विन्दौ तदूर्द्ध्वं सुषुम्न्यां नादेनादन्त एव च ॥
भ्रूमण्डले ब्रह्मरन्ध्रे विन्यसेत् कुलनायिके ! ।
त्रितारमूलमन्त्रान्ते सर्वमन्त्रात्मिकापदम् ॥
आर्य्यै पराम्बादेव्यै च हृदये व्यापकं न्यसेत् ।
मन्त्रन्यासं विधायेत्थं दैवतन्यासमाचरेत् ॥
त्रितारमूलमन्त्रान्ते अं आं सहस्रकोटि च ।
योगिनीकुलशब्दान्ते सेवितायै पदं वदेत् ॥
निवृताम्बापदाद्देव्यै नम इत्युच्चरेत् प्रिये ! ।
इमां योगिनीप्रतिष्ठां शेषं पूर्ववदाचरेत् ॥
उं ऊं तपस्वी विद्याञ्च शेषं पूर्ववदाचरेत् ।
ऋं ॠं शान्तं तथा शान्तिं शेषं पूर्ववदुच्चरेत् ॥
ऌं ॡं मुनिं शान्त्यतीतां शेषं पूर्ववदुच्चरेत् ।
एं ऐं देवञ्च हृल्लेखां शेषं पूर्ववदुच्चरेत् ॥
ओं औं राक्षसशब्दान्ते गगनां पूर्ववदुच्चरेत् ।
अं अः विद्याधरं रक्तां शेषं पूर्वव[illegible]त् ॥

कं खं महोग्राक्षां शेषं पूर्ववदुच्चरेत्।
गं घं साध्यमहाकरालां शेषं पूर्ववदुच्चरेत्॥
ङं चं तथाप्सरोजायां शेषं पूर्ववदुच्चरेत्।
छं जं गन्धर्वविजयां शेषं पूर्ववदुच्चरेत्॥
झं ञं गुह्यकशब्दान्ते शेषं पूर्ववदुच्चरेत्।
टं ठं वचोऽपराजितां शेषं पूर्ववदुच्चरेत्॥
डं ढं किन्नरवामाञ्च शेषं पूर्ववदुच्चरेत्।
णं तं पन्नगज्येष्ठाञ्च शेषं पूर्ववदुच्चरेत्॥
थं दं च पितृरौद्राम्बां शेषं पूर्ववदुच्चरेत्।
धं नं गणेशमायाञ्च शेषं पूर्ववदुच्चरेत्॥
पं फं भैरवशब्दान्ते कुण्डलीं पूर्ववत् परम्।
बं भं वटुककालीञ्च शेषं पूर्ववदुच्चरेत्॥
मं यं चेतेशशब्दान्ते कालरात्रिञ्च पूर्ववत्।
रं लं प्रथमभगवतीं शेषं पूर्ववदुच्चरेत्॥
वं शं ब्रह्मा सर्वेश्वरीं शेषं पूर्ववदुच्चरेत्।
षं सं विष्णुञ्च सर्वज्ञां शेषं पूर्ववदुच्चरेत्॥
हं लं रुद्रसर्वकर्त्रीं शेषं पूर्ववदुच्चरेत्।
क्षं चराचरशब्दान्ते कुलशक्तिञ्च पूर्ववत्॥
अङ्गुष्ठगुल्फजङ्घासु जानूरुकटिपार्श्वके।
स्तनवक्षःकरस्कन्धकर्णमूर्द्धस्वपि क्रमात्॥
दक्षभागादिवामान्तं विन्यसेत् कुलनायिके!।
त्रितारमूलमन्त्रान्ते सर्वदेवात्मिकां पदम्॥
आद्यै पराम्बादेव्यै च हृदये व्यापकं न्यसेत्।
देवन्यासं विधायेत्थं मातृकान्यासमाचरेत्॥
त्रितारमूलमन्त्रान्ते कवर्गानन्तकोटिभू।
चरीकुलसेवितायै आं क्षां हि मङ्गलापदम्॥

अम्बादेव्यै नमोद्राच्चां ब्रह्मनाले ततः परम् ।
अम्बादेव्यै ततोऽनन्तकोटिभूतं ततो वदेत् ॥
सेविताय ततो अं चं मङ्गलनाथाय ततो वदेत् ।
अं चं असिताङ्गभैरवाय नम उच्चरेत् ॥
चवर्गं खेचरी ईं णीं चाकचर्चिका च महेश्वरी ।
वैताल म इं लां चर्चिकं रुरुं शेषञ्च पूर्ववत् ॥
टवर्गं पातालचरीं ऊं हां योगिश्वरीं वदेत् ।
कौमारीञ्च पिशाचञ्च उं हं योगेशचण्डकौ ॥
तवर्गं दिक्चरीं ऋं हरसिद्धान्तवैष्णवीम् ।
अपस्मारं ॠं सं हरसिद्धक्रोधादि पूर्ववत् ॥
पवर्गं सहचरीं ऌं षां भट्टिकावाह्यतः ।
ब्रह्मराक्षसकं ॡं षं भट्टोन्मत्तादि पूर्ववत् ॥
यवर्गं ख्याद्दिविचरीं ऐं शां किलिकिलीतिच ।
इन्द्राणीं चेटकं एं शं किलिः कापालिकिस्तथा ॥
शवर्गं वनचरीं औं वां देवि ! कालादिरात्रि च ।
चामुण्डां ओं वं उच्चार्य्य कालरात्रिश्च भीषणः ॥
लक्षं जलचरीं मां लां भवेत् पश्चाच्च भीषणाम् ।
महालक्ष्मीं शाकिनीञ्च अं लं पश्चाच्च भीषणः ॥
संहारभैरवश्चैव शेषं पूर्ववदुच्चरेत् ।
मूलाधारलिङ्गनाभि अनाहतविशुद्धिषु ॥
आज्ञाभालतलब्रह्मरन्ध्रेष्वेवं प्रविन्यसेत् ।
त्रितारमूलमन्त्रान्ते मातृभैरवशब्दतः ॥
अधिपायै पराम्बादेव्यै नमो व्यापकं न्यसेत् ।
मातृन्यासं महेशानि ! कुर्य्यादेवं समाहितः ॥
एवं न्यस्ततनुर्द्देवि ! ध्यायेद्देवीमनन्यधीः ।
अमृतार्णवमध्योद्यन्मणिद्वीपे सुशोभिते ॥

कल्पवृक्षवनान्तस्थनवमाणिक्यमण्डपे।
नवरत्नमयं श्रीमत्सिंहासनगतेऽम्बुजे॥
त्रिकोणान्तःसमासीनं चन्द्रसूर्य्यसमन्वितम्।
अर्द्धाम्बिकासमायुक्तं प्रविभक्तविभूषणम्॥
कोटिकन्दर्पलावण्यं सदा षोड़शवार्षिकम्।
मन्दस्मितमुखाम्भोजं त्रिनेत्रं चन्द्रचूड़कम्॥
दिव्याम्बरस्रगालेपं दिव्याभरणभूषितम्।
पानपात्रञ्च चिन्मुद्रां त्रिशूलं पुस्तकं करैः॥
विद्यासंसिद्धिबिभ्राणं सदानन्दमुखेक्षणम्।
महाषोढ़ोदिताशेषदेवतागणसेवितम्॥
एवं चित्ताम्बुजे ध्यायेदर्द्धनारीश्वरं शिवम्।
पुंरूपं वा स्मरेद्देवि! स्त्रीरूपं वा विचिन्तयेत्॥
अथवा निष्कलं ध्यायेत् सच्चिदानन्दलक्षणम्।
सर्व्वतेजोमयं देवि! सचराचरविग्रहम्॥
ततः सन्दर्शयेन्मुद्रादशकं परमेश्वरि!।
योनिं लिङ्गञ्च सुरभिञ्चेति मुद्राचतुष्टयम्॥
वनमालामहामुद्रां नभोमुद्रामिति क्रमात्।
यथाशक्ति जपेन्मन्त्रमूलं श्रीपादुकामपि॥
मूर्द्ध्नि सञ्चिन्तयेद्देवि! श्रीगुरुं शिवरूपिणम्।
सहस्रदलपङ्कजे सकलशीतरश्मिप्रभम्
वराभयकराम्बुजं विमलगन्धपुष्पस्रजम्।
प्रसन्नवदनेक्षणं सकलदेवतारूपिणम्
स्मरेत् शिरसि हंसगं तदभिधानपूर्व्वं गुरुम्॥
एवं न्यासे कृते देवि! साक्षात् परशिवो भवेत्॥
मन्त्री नैवात्र सन्देहो निग्रहानुग्रहक्षमः।
महाषोढ़ाह्वयं न्यासं यः करोति दिने दिने॥

देवाः सर्वे नमस्यन्ति तं नमामि न संशयः ।
महाषोढ़ाह्वयं न्यासं यः करोति हि पार्वति ! ॥
दिव्यक्षेत्रं समुद्दिष्टं समन्ताद्दशयोजनम् ।
कृत्वा न्यासमिमं देवि ! यत्र गच्छति मानवः ॥
तत्र स्याद्विजयो लाभः सन्मानं पौरुषं प्रिये ! ।
महाषोढ़ाकृतन्यासस्तदोच्चयति वन्दितः ॥
मासान्मृत्युमवाप्नोति यदि त्राता सदाशिवः ।
वज्रपञ्जरनामेदं मन्त्री न्यासं करोति यः ॥
दिव्यन्तरीक्षभूशैलजलारण्यनिवासिनः ।
प्रचण्डभूतवेतालदेवयक्षोरगादयः ॥
भयग्रस्तेन मनसा तं नेक्षन्ति कुलेश्वरि ! ।
महाषोढ़ाह्वयं न्यासं ब्रह्मविष्णुशिवादयः ॥
देवाः सर्वे प्रकुर्वन्ति ऋषयोऽपि मुनीश्वराः ।
बहुनोक्तेन किं देवि ! नाशिष्याय प्रकाशयेत् ॥
नापराय च देवेशि ! अन्यसिद्धिप्रदायिका ।
आज्ञासिद्धिमवाप्नोति तस्मान्न्यासं समाचरेत् ॥
अतः परतरः साक्षाद्देवताभावसिद्धये ।
लोके नास्ति न सन्देहः सत्यमेतद्वदाम्यहम् ॥
ऊर्द्ध्वाम्नायप्रवेशश्च परप्रासादचिन्तनम् ।
महाषोढ़ापरिज्ञानं नाल्पस्य तपसः फलम् ॥
इति ते कथितं किञ्चिन्महान्यासादिकं प्रिये ! ।
समासेन कुलेशानि ! किम्भूयः श्रोतुमिच्छसि ॥

इति कुलार्णवे महारहस्ये महाषोढ़ाह्वयचतुर्थ उल्लासः ।

---

# पञ्चम उल्लासः।

देव्युवाच। कुलेशाधारपात्राणां पिशितानाञ्च लक्षणम्।
कुलद्रव्यस्य निर्म्माणं भेदमाहात्म्यमेव च॥
अविधानेन यत् पापं सविधानेन यत् फलम्।
तत्सर्वं श्रोतुमिच्छामि वद मे करुणानिधे!॥
ईश्वर उवाच। शृणु देवि! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि।
तस्य श्रवणमात्रेण त्रिदशैः समतां व्रजेत्।
आधारेण विना भ्रंशो न च गृह्णन्ति मातरः॥
तस्माद्विधिवदाधारं कल्पयेत् कुलनायिके!।
आधारं त्रिपदं प्राहुः षट्पदं वा चतुष्पदम्॥
अथवा वर्त्तुलाकारं कुर्य्याद्देवि! मनोरमम्।
स्वर्णरौप्यमयैः कूर्म्मकपालालावुमृण्मयैः॥
नारिकेलञ्च शङ्खञ्च मुक्ताशुक्तिसमुद्भवम्।
पुण्यक्षेत्रसमुद्भूतं पात्रं कुर्य्याद्विचक्षणः॥
अतिसूक्ष्ममतिस्थूलं छिन्नं भिन्नञ्च वर्जयेत्।
स्वर्णरौप्याणि ताम्राणि सर्वसिद्धिकराणि च॥
शान्तिके चपलापात्रं स्तम्भने चैव मृण्मयम्।
नारिकेलञ्च वश्ये स्यादभिचारे च कूर्म्मजम्॥
शङ्खं ज्ञानप्रदं शुक्तिर्देवीप्रीतिप्रदायिनी।
कपालालावुपात्राणि सर्वपापहराणि च॥
पुण्यक्षेत्रजपात्राणि सर्वपापहराणि च।
उक्तेष्वेतेषु पात्रेषु पात्रमेकं प्रकल्पयेत्॥
कुलद्रव्यं प्रवक्ष्यामि शृणु देवि! समाहिता।
अम्भसां द्वादशप्रस्थं प्रस्थार्द्धं तक्रमेव च॥
तण्डुलानां चतुःप्रस्थं द्विप्रस्थञ्च तथाम्भसाम्।
मुष्टिमात्राङ्कुरो देवि! एकस्मिन् मेलयेद्घटे॥

शीतादिरहिते स्थाने स्थापयेद्दारवेश्मनि ।
पश्चादग्नौ समारोप्य जम्बालसदृशं पचेत् ॥
अवरोप्य पुनः शीतामवस्थां प्रापयेत्ततः ।
पादेन प्रस्थकैः पिष्ट्वा हस्ताभ्यां मेलयेत् सुधीः ॥
प्रस्थार्द्धान् तण्डुलान् वाष्पपरिद्युस्तत् समुद्धरेत् ।
सम्यक् संमर्द्य तक्रेण पाकमालोड्य मेलयेत् ॥
एषा पैष्टीति विख्याता पूजिता देवदानवैः ।
गौड़ी चूर्णमयी वञ्जुलत्वक् सहसाम्भसा ॥
दशप्रस्थं कुलेशानि ! धातकीकुसुमं समम् ।
नारिकेलप्रसूनं वा चैकप्रस्थं विनिक्षिपेत् ॥
हरीतकी चाक्षफलं वसुनिष्कप्रमाणतः ।
वह्नित्रिकटुकश्चापि निष्कमात्रप्रमाणतः ॥
गुड़सम्मिश्रमेकस्मिन् योजयेत् सुदृढे घटे ।
करेण भ्रामयेत् सम्यगनुलोमविलोमतः ॥
अष्टोत्तरशतावृत्त्या त्रिषु रात्रिन्दिवं सतम् ।
दशाहेन तु पाकः स्यात् पीयते तत्र योगिनी ॥
एषा गौड़ीति कथिता शिवसायुज्यहेतुका ।
द्विगुणं मकरन्दः स्याद्वारि संयोजयेद् घटे ॥
द्वादशाहेन पाकः स्याच्छेषमन्यत् पुरोक्तवत् ।
एषा माध्वी समुद्दिष्टा देवताप्रीतिकारिणी ॥
एका शुण्ठी द्विवह्निश्च मरीचद्वितयं तथा ।
धातकी च चतुष्कं स्यात् पुष्पाणि षट् मधुत्रयम् ॥
अशीतिगुड़सम्मिश्रं शेषमन्यत् पुरोक्तवत् ।
इदं मनोहरं द्रव्यं योगिनीपानमुत्तमम् ।
सार्द्धेन्दुपलको दध्ना माहिषं प्रस्थमात्रकम् ॥
मोचापक्वशतञ्चापि योगोऽयं मदिरा स्मृता ।

तं मेलयित्वा संयोज्य सार्द्धं वंशपुटे पचेत् ॥
चत्वारिंशद्दिनान्यष्टौ पङ्के पङ्कजसम्भवे ।
विधायोद्धृत्य किरणैः सौरैः सर्वाणि शोषयेत् ॥
यदा च कठिनीभावस्तदा संगृह्य मानतः ।
गुञ्जाफलप्रमाणन्तु जले सम्मिलितं शुभम् ॥
आत्मस्थं पूरयेत् पात्रं मकरन्दरसैः परम् ।
एतदप्युत्तमं द्रव्यं सर्वदेवप्रियं प्रिये ! ॥
एतानि मदहेतूनि मदान्यन्यानि कारयेत् ।
पानसं द्राक्षमाध्वीकं खार्जूरं तालमैक्षवम् ॥
मधूच्छिष्टन्तु माध्वीकं मैरेयं नारिकेलजम् ।
मद्यान्येकादशैतानि भुक्तिमुक्तिकराणि च ॥
द्वादशन्तु सुरामद्यं सर्वेषामुत्तमं प्रिये ! ।
पैष्टी गौड़ी च माध्वी च विज्ञेया त्रिविधा सुरा ॥
सर्वसिद्धिकरी पैष्टी गौड़ी भोगप्रदायिनी ।
माध्वी मुक्तिकरी ज्ञेया सुराख्या देवता प्रिये ! ॥
विद्याप्रदैक्षवी ज्ञेया द्राक्षा राज्यप्रदा भवेत् ।
तालजा स्तम्भने शस्ता खार्जूरी रिपुनाशिनी ॥
नारिकेलभवा श्रीदा पानसी च शुभप्रदा ।
मधुजाख्या ज्ञानकरी दारिद्र्यरिपुनाशिनी ॥
मैरेयाख्या कुलेशानि ! सर्वदा पापहारिणी ।
क्षीरवृक्षसमुद्भूतं मद्यं वल्कलसम्भवम् ॥
मधुपुष्पसमुद्भूतमासवं तण्डुलोद्भवम् ।
यस्यानन्दं निर्विकारं समानि च मनोहरम् ॥
मद्यं तदुत्तमं देवि ! देवानां प्रीतिकारकम् ।
आत्मस्थं पूरयेत् पात्रं परमानन्दवान्नरः ॥
एतदामोदकं द्रव्यं सर्वदेवप्रियं प्रिये ! ।

सुरादर्शनमात्रेण सर्वपापैः प्रमुच्यते ॥
तद्गन्धाघ्राणमात्रेण शतक्रतुफलं लभेत् ।
तस्य सन्दर्शमात्रेण तीर्थकोटिफलं लभेत् ॥
देवि ! तत्पानतः साक्षाल्लभेन्मुक्तिं चतुर्विधाम् ।
इच्छाशक्तिः सुरामोदे ज्ञानशक्तिश्च तद्रवे ॥
तत्स्वादे च क्रियाशक्तिस्तदुल्लासे परा स्थितिः ।
मदिरा ब्रह्मगा प्रोक्ता चित्तशोधनसाधनी ॥
तासामेकां समुद्धृत्य पूजाकर्म समारभेत् ।
मद्यं मांसादि विजया चाष्टगन्धैश्च संश्रिता ॥
संमर्द्य वटकान् कृत्वा संरक्षाथ विचक्षणः ।
मद्याभावे तु वटिकां जले संयुज्य तर्पयेत् ॥
गुड़मिश्रेण तक्रेण तेन वा मधुभाजिना ।
सौवीरेणाथवा कुर्य्यादेतत् कर्म न लोपयेत् ॥
प्रमादाद्यदि लुप्येत देवताशापमाप्नुयात् ।
मांसदर्शनमात्रेण सुरादर्शनवत् फलम् ॥
मांसन्तु त्रिविधं प्रोक्तं खभूजलचरं प्रिये ! ।
यथासम्भवमप्येवं तर्पणार्थं प्रकल्पयेत् ॥
पितृदैवतयज्ञेषु देवि ! हिंसा विभाविता ।
आत्मार्थं प्राणिनां हिंसा कदाचिन्नोदिता प्रिये ! ॥
स्वनिमित्तं तृणं वापि छेदयेन्न कदाचन ।
देवतार्थं द्विजं गां वा हत्वा पापैर्न लिप्यते ॥
मामनादृत्य पुण्येऽपि पापं स्यात् प्रत्यवायतः ।
मन्निमित्तं चरेत् पापं पुण्यं भवति शाम्भवि ! ।
यैरेव पतनं द्रव्यैः सिद्धिस्तैरेव चोदिता ॥
श्रीकौलदर्शने चापि भैरवेण महात्मना ।
यत् कर्म कुर्वतां पुंसां कर्मलोपो भवेद् यदि ॥

तत् कर्म ते प्रकुर्वन्ति सप्तकोटिमुनीश्वराः ।
हन्यान्मन्त्रेण चानेन त्वाभिमन्त्र्य पशुं प्रिये ! ॥
गन्धपुष्पाक्षतैः पूज्यमन्यथा नरकं व्रजेत् ।
शिवोत्क्रान्तमिदं चाशु अतस्त्वां शिवतां व्रजेत् ॥
तद्‌बुध्वाशु पशो ! त्वं हि माशिवस्त्वं शिवोऽसि हि ।
ब्रह्मा स्यात् सलिले विष्णुर्गन्धे रुद्रश्च तद्रसे ॥
परमात्मा तदानन्दे तस्मात् सेव्यमिदं प्रिये ! ।
मांसाभावे तु लशुनमार्द्रकं नागपल्लवम् ॥
आदाय पूजयेद्देवीमन्यथा निष्फलं भवेत् ।
मत्स्यमांसविहीनेन मद्येनापि न तर्पयेत् ॥
न कुर्य्यान्मद्यसामान्यं विना द्रव्येण पूजयेत् ।
पिशितं तिलमात्रन्तु तिलार्द्धमपि विन्दुना ॥
सकृत्तर्पणमात्रेण सर्वयज्ञफलं लभेत् ।
कुलपूजासमं नास्ति पुण्यमन्यज्जगत्त्रये ॥
तस्माद्यः पूजयेद्भक्त्या भक्तिमुक्त्योः स भाजनम् ।
अनधीतोऽप्यशास्त्रज्ञो गुरुभक्तो दृढव्रतः ॥
कुलपूजारतो यस्तु स मे प्रियतमो भवेत् ।
चतुर्णामपि वर्णानामाश्रमाणामपीश्वरि ! ।
पुंस्त्रीनपुंसकानान्तु पूजितेऽष्टफलप्रदा ॥
इहामुत्र शुभं दद्यात् पूजिता सुवधूरिव ।
अपूजिता त्वं देवेशि ! दुःखदा कुवधूरिव ॥
कुलपूजां विना यस्तु करोत्येवं सुदुर्मतिः ।
स याति नरकं घोरमेकविंशतिभिः सह ॥
तस्मात् सर्वप्रयत्नेन कुलपूजारतो भवेत् ।
लभते सर्वसिद्धीश्च नात्र कार्य्या विचारणा ॥
आराधनासमर्थश्चेद्दद्यादर्च्चनसाधनम् ।

यो दातुं नैव शक्नोति कुर्य्यादर्च्चनसाधनम् ॥
सम्यक् शतक्रतून् कृत्वा यत् फलं समवाप्नुयात् ।
तत् फलं समवाप्नोति सकृत् कृत्वा कुलार्च्चनम् ॥
कृत्वा षोड़शदानानि यत्फलं लभते प्रिये ! ।
तत्फलं समवाप्नोति कृत्वा श्रीचक्रदर्शनम् ॥
सार्द्धत्रिकोटितीर्थेषु स्नात्वा यत्फलमाप्नुयात् ।
तत्फलं लभते भक्त्या कृत्वा श्रीचक्रदर्शनम् ॥
बहुनोक्तेन किं देवि ! यथा भक्त्या ददाति यः ।
कुलाचार्य्याय पूजार्थं कुलद्रव्यं स धर्मवित् ॥
शैवे वा वैष्णवे शाक्ते सौरेषु शतदर्शने ।
बौद्धे पाशुपते सांख्ये तथा व्रतमुखेऽपि वा ॥
दक्षिणे वामसिद्धान्ते वैदिकादिषु पार्वति ! ।
विना नीलसिताभ्यान्तु पूजनं निष्फलं भवेत् ॥
कुलद्रव्यैर्विना कुर्य्याज्जपपूजातपोव्रतम् ।
निष्फलं तद्भवेद्देवि ! भस्मनीव यथाहुतम् ॥
यथैवान्तश्चरा राज्ञः प्रियाः स्युर्न बहिश्चराः ।
तेनान्तर्यागनिष्ठा ये प्रिया मे देवि ! नापरे ॥
समर्पयन्ति ये भक्त्या आवाभ्यां पिशितासवम् ।
उत्पादयति चानन्दं मत्प्रियाः कौलिकाश्च ये ॥
भावयोः परमाकारं सच्चिदानन्दलक्षणम् ।
कुलद्रव्योपभोगेन परिस्फुरति चान्यथा ॥
अलक्ष्यानुभवोल्लासो मनोवाचामगोचरः ।
कुलद्रव्योपभुक्तेन जायते नान्यथा प्रिये ! ॥
सेविते च कुलद्रव्ये कुलतत्त्वार्थदर्शनः ।
जायते भैरवावेशः सर्वत्र समदर्शनः ॥
तमः परिहृतं वेश्म यथा दीपेन दृश्यते ।

तथा मायावृतोह्यात्मा ज्ञानदीपेन दृश्यते ।
मन्त्रपूतं कुलद्रव्यं गुरुदेवार्पितं प्रिये ! ॥
ये पिबन्ति जलं तेषां स्तनपानं न विद्यते ।
मद्यन्तु भैरवोदेवो मद्यं शक्तिः समीरिता ॥
अहोभोक्ता च मद्यस्य मोहयेदमरानपि ।
तन्मैरेयं शिवं पीत्वा यो वा विकुरुते नरः ॥
मद्ध्यानैकपरो भूत्वा स मुक्तः स च कौलिकः ।
सुराशक्तिः शिरोमांसं तद्भोक्ता भैरवः स्वयम् ॥
तयोरैक्यं समुत्पन्नमानन्दोमोक्षमुच्यते ।
आनन्दं ब्रह्मणोरूपं तच्च देहे व्यवस्थितम् ॥
तस्याभिव्यञ्जकं मद्यं योगिभिस्तेन पीयते ।
कुम्भकम्बुकपात्राणि मधुपूर्णानि बिभ्रतः ॥
किं न पश्यति लोकोऽयं ब्रह्मविष्णुमहेश्वरान् ।
निःशङ्कोनिर्भयो वीरो निर्लज्जोनिष्कुतूहलः ॥
निर्णीतवेदशास्त्रार्थो वरदां वारुणीं पिबेत् ।
मन्त्रसंस्कारसंशुद्धामृतपानेन पार्वति ! ॥
जायते देवताभावो भवबन्धविमोचकः ।
ब्राह्मणस्य सदा पेयं क्षत्रियस्य रणागमे ॥
गवामालम्बने वैश्य शूद्रस्यालोष्टकर्मणि ।
देवान् पितॄन् समभ्यर्च्य देवि ! शास्त्रोक्तवर्त्मना ॥
गुरुं स्मरन् पिबन्मद्यं खादन् मांसं न दोषभाक् ।
तृप्त्यर्थं सर्वदेवानां ब्रह्मज्ञानं विधाय च ॥
सेवते मधुमांसानि तृष्णया चेत् स पातकी ।
मन्त्रार्थस्मरणञ्चैव मनसः स्थिरहेतवे ॥
भवपाशनिवृत्त्यर्थं ज्ञानपानं समाचरेत् ।
ः सेवेत सुखार्थाय मद्यादीनि स पातकी ॥

प्राशयेद्देवताप्रीत्या ह्यभिलाषविवर्जितः ।
मत्स्यमांससुरादीनां मादकानां निषेवणम् ॥
यागकालं विनान्यत्र दूषणं कथितं प्रिये ! ।
यथा क्रतुषु विप्राणां सोमपानं विधीयते ॥
मद्यपानं तथा कार्य्यं समयभोगमोक्षदम् ।
श्रीगुरोः कुलशास्त्रेभ्यः सम्यग्विज्ञाय वासनाम् ॥
पञ्चमुद्रां निषेवेत चान्यथा पतितो भवेत् ।
आवृत्तिं गुरुपङ्क्तिञ्च वटुकादीनपूज्य च ॥
वीरोऽप्यत्र वृथापानं देवताशापमाप्नुयात् ।
अयष्ट्वा भैरवं देवं अकृत्वा मन्त्रतर्पणम् ॥
पशुपानविधौ पीत्वा वीरोऽपि नरकं व्रजेत् ।
अज्ञात्वा कौलिकाचारं अयष्ट्वा गुरुपादुकाम् ॥
योऽस्मिन् तन्त्रे प्रवर्त्तेत तन्तु पीड़यसे ध्रुवम् ।
कौलज्ञाने ह्यसिद्धो यस्तद्द्रव्यं भोक्तुमिच्छति ॥
स महापातकी ज्ञेयः सर्वधर्मबहिष्कृतः ।
समयाचारहीनस्य दैधवृत्तित्वमानिनः ॥
न सिध्येन्मत्कृतं सर्वं तत्तस्य नरकायते ।
यः शास्त्रविधिमुत्सृज्य वर्त्तते कामचारतः ॥
स सिद्धिमिह नाप्नोति परत्र नरके गतिम् ।
स्वेच्छायारममाणो यो दीक्षासंस्कारवर्जितः ॥
न तस्य सद्गतिः क्वापि तपस्तीर्थव्रतादिभिः ।
असंस्कृतं पिबेद्द्रव्यं बलात्कारेण मैथुनम् ॥
अप्रियेण हतं मांसं रौरवं नरकं व्रजेत् ।
कौलाः पाशुपताश्चैव पञ्चद्रव्यविडम्बकाः ॥
केशसंख्या स्मृता यावत्तावत्तिष्ठति रौरवे ।
कुलद्रव्याणि सेवन्ते येऽन्यदर्शनमाश्रिताः ॥

यदङ्गरोमसंख्यातं भूतयोनिषु जायते।
मदप्रच्छादितात्मा च न किञ्चिदपि वेत्ति च॥
न ध्यानं न तपो नार्च्चा न धर्मो न च सत्क्रिया।
न मन्त्रदेवगुर्वात्माविचारो न हि कौलिकः॥
केवलं विषयाशक्तः पतत्येव न संशयः।
मद्याशक्तो न पूजार्थी मांसाशी स्त्रीनिषेवकः॥
कौलोपदेशहीनो यः सोऽक्षयं नरकं व्रजेत्।
असंस्कारीतु योनौ स्यात् पञ्चमुद्रां निषेवते॥
कुलेशि! ब्रह्मनिष्ठोऽपि निन्द्यतामधिगच्छति।
लिङ्गत्रयविशेषज्ञः षड़ाधारविभेदकः॥
पीठस्थानानि चागत्य महापद्मवनं व्रजेत्।
आमूलाधारमाब्रह्मरन्ध्रं गत्वा पुनः पुनः॥
चिच्चन्द्रकुण्डलीशक्तिः सासवस्य सुखोदयः।
व्योमपङ्कजनिस्यन्दसुधापानरतो नरः॥
मधुपायी समं प्रोक्तस्त्वितरे मद्यपायिनः।
पुण्यापुण्यपशुं हत्वा ज्ञानखड्गेन योगवित्॥
परे शिवे! नयेच्चित्तं पलाशी स निगद्यते।
मनसा चेन्द्रियगणं संयोज्यात्मनि योगवित्॥
मांसाशी स भवेद्देवि! शेषाः स्युः प्राणिहिंसकाः।
अप्रबुद्धापशूक्तो हि प्रबुद्धा कौलिकस्य च॥
शक्तीनां सेवको यस्तु स भवेत् शक्तिसेवकः।
परशक्त्यात्ममिथुनसंयोगानन्दनिर्भरः॥
य आस्ते मैथुनं तत्स्यादपरे स्त्रीनिषेवकाः।
इत्यादि पञ्चमुद्राणां वासना कुलनायिके॥
ज्ञात्वा गुरुमुखाद्देवि! यः स्मरेत् सतु मुच्यते।
इति ते कथितं किञ्चित् कुलद्रव्यादिलक्षणम्।

समासेन कुलेशानि ! किम्भूयः श्रोतुमिच्छसि ॥

इति कुलार्णवे महारहस्ये कुलद्रव्यादिसंस्कारकथनं नाम पञ्चम उल्लासः ।

---

## षष्ठ उल्लासः ।

देव्युवाच । कुलेश ! श्रोतुमिच्छामि पूजनस्य च लक्षणम् ।
कुलद्रव्यादिसंस्कारमर्चनं वद मे शिव ! ॥
ईश्वर उवाच शृणु देवि ! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण स्तूयसे देवदानवैः ॥
निरस्तपातका यत्र मानवाः पुण्यकर्म्मिणः ।
कुलज्ञानसुसम्पन्ना भजन्ते च दृढ़व्रताः ॥
पूर्णाभिषेकसहितो वेदशास्त्रार्थतत्त्ववित् ।
देवता गुरुभक्तस्तु नियतात्मार्चयेत् प्रिये ! ॥
कुलागमरहस्यज्ञो देवताराधनोत्सुकः ।
गुरूपदेशसंयुक्तः पूजयेत् कुलनायिके ! ॥
शुद्धात्मा चाति संहृष्टः क्रोधलौल्यविवर्जितः ।
पशुव्रतादिविमुखः सुमुखस्तु यजेत् प्रिये ! ॥
यदा पुंसः कृतार्थस्य कालेन बहुना प्रिये ! ।
मत्प्रसादेन भूयाच्च द्रव्यशक्तिसमागमः ॥
तदर्हं तर्पणं कुर्य्याद्द्रव्यैः श्रीभैरवोदितैः ।
गुरूपदेशविधिना चान्यथा पतनं भवेत् ॥
मन्त्रयोगेन देवेशि ! कुर्य्यात् श्रीचक्रपूजनम् ।
तदहं तु त्वया सार्द्धं गृह्णामि स्वयमादरात् ॥
भैरवोऽहमिति ज्ञानात् सर्वज्ञादिगुणान्वितः ।
इति संचिन्त्य योगीन्द्रः कुलपूजां समाचरेत् ॥
इत्यादि लक्षणोपेतः कौलिको नियतव्रतः ।
यस्त्वां समर्चयेद्देवि ! भक्तिमुक्त्योः स भाजनम् ।

एकान्ते विजनेऽरण्ये देशे बाधाविवर्जिते।
सूक्ष्मासने समासीनः प्राङ्मुखो वाप्युदङ्मुखः॥
अमृतार्णमणिद्वीपे कल्पवृक्षतरोस्तले।
वज्रप्राकारसन्दीप्तं स्मरेन्माणिक्यमण्डपम्॥
पुष्पमालावितानाढ्यं प्रच्छन्नपटसंवृतम्।
कर्पूरदीपभास्वन्तं धूपामोदसुगन्धिकम्॥
तन्मण्डपं सुधात्मानं ध्यात्वा नाकुलचेतसा।
श्रीगुरोराज्ञया देवि! कुलपूजां समाचरेत्॥
आत्मस्थानमनुद्रव्यदेहशुद्धिस्तु पञ्चमी।
यावन्न कुरुते मन्त्री तावद्देवार्चनं कुतः॥
सुस्नान्भूतसंशुद्धि प्राणायामादिभिः प्रिये!।
षडङ्गाद्यखिलन्यासैरात्मशुद्धिः समीरिता॥
संमार्जनानुलेपाद्यैर्दर्पणोदरवत् कृतम्।
वितानधूपदीपादि पुष्पमालोपशोभितम्॥
पञ्चवर्णरजश्चित्रं स्थानशुद्धिरितीरिता।
ग्रथित्वा मातृकावर्णैर्मूलमन्त्राक्षराणि च॥
क्रमोत्क्रमाद्विरावृत्त्या मन्त्रशुद्धिरितीरिता।
पूजाद्रव्यासनं प्रोक्ष्य मूलेनैव विधानवित्॥
दर्शयेद्धेनुमुद्राञ्च द्रव्यशुद्धिरितीरिता।
पीठे देवं प्रतिष्ठाप्य सकलीकृतविग्रहः॥
मूलमन्त्रेण दीप्तात्मा न्यासद्रव्योदकेन च।
त्रिवारं प्रोक्षयेद्विद्वान् देहशुद्धिरितीरिता॥
पञ्चशुद्धिं विधायेत्थं पश्चाद् यजनमाचरेत्।
सा पूजा सफला प्रोक्ता चान्यथा निष्फला भवेत्॥
मण्डलेन विना पूजा निष्फला कथिता प्रिये!।
तस्मान्मण्डलमालिख्य विधिवत्तत्र पूजयेत्॥

अखण्डमण्डलाकारं विश्वं व्याप्य चराचरम् ।
त्रैलोक्यं मण्डितं येन मण्डलं तत् सदाशिवम् ॥
उड्यानं चतुरस्रं स्यात् कामरूपञ्च वर्त्तुलम् ।
जालन्धरञ्च चन्द्रार्द्धं त्र्यस्रं पूर्णगिरिर्भवेत् ॥
अभ्यर्च्य मण्डलं पश्चादाधारं स्थापयेत् क्रमात् ।
शङ्खमर्घ्यं भोगपूजा बलिपात्रञ्च पञ्चधा ॥
मूलपात्रन्तु संस्थाप्य अभ्यर्च्य चासनेन तु ।
सम्पूज्य मूलमन्त्रेण कुलेश्वरि ! विधानवित् ॥
तत्र मासप्रमाणन्तु मत्स्यं मांसं विनिक्षिपेत् ।
नष्टैः पर्य्युषितोद्दिष्टैर्दुर्गन्धैर्गन्धवर्जितैः ।
हेतुभिः सह पात्रस्थैस्तर्पितं निष्फलं भवेत् ।
स्वाधिष्ठैश्च वाधिष्ठैश्च द्रव्यैरमृतसन्निभैः ॥
मनोहरैर्महेशानि ! तर्पणं सफलं भवेत् ।
असंस्कृतं सुरापानं कलहव्याधिदुःखदम् ॥
कीर्त्तिरायुश्च सौख्यञ्च धर्मोविद्या च नश्यति ।
तस्मात् संस्कृत्य विधिवत् कुलद्रव्यं ततोऽर्च्चयेत् ॥
अन्यथा नरकं याति तद्भोक्ता नात्र संशयः ।
विना द्रव्याधिवासेन न जपेन्न स्मरेत् प्रिये ! ॥
ये स्मरन्ति नरा मूढास्तेषां दुःखं पदे पदे ।
नासवेन विना मन्त्रो न मन्त्रेण विनासवः ॥
परस्परविरोधित्वात् कथं पूजा विधीयते ।
तत् संशयनिवृत्तिञ्च ज्ञात्वा गुरुमुखात् प्रिये ! ॥
वीक्षणं प्रोक्षणं ध्यानं मन्त्रमुद्राविशोधनम् ।
द्रव्यं तर्पणयोग्यं स्यात् देवताप्रीतिकारकम् ॥
अग्निसूर्य्येन्दुब्रह्मेन्द्र विष्णुरुद्रसदाशिवैः ।
चतुर्विंशतिमन्त्रैः स्यान्मद्यञ्चैव परामृतम् ॥

अमृता मानदा पूषा तुष्टिः पुष्टीरतिर्धृतिः।
शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा॥
पूर्णा पूर्णामृता चेति कथिताः कुलनायिके!।
सौम्याः कामप्रदायिन्यः षोड़शस्वरजाः कलाः॥
तपनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः।
सुषुम्ना भोगदा विश्वा रोधिनी धारिणी क्षमा॥
कलाद्या वसुधाः सौराः प्रभा द्वादश ईरिताः।
धूम्रार्चिरुष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी॥
सुश्रीस्वरूपा कपिला हव्यकव्यवहा तथा।
आग्नेया यादि वर्णाद्या दशधर्मप्रदाः कलाः॥
तुष्टिर्मेधा स्मृतिऋद्धिः कान्तिर्लक्ष्मीर्द्युतिः स्थिरा।
स्थितिः सिद्धिरिति प्रोक्ता कचवर्गकला दश॥
अकारार्ण समुद्भूता ब्रह्मणस्तु कला इमा।
जवाकपालिनी शान्तिरीश्वरी रतिकामिके॥
वरदा ह्लादिनी प्रीति तथाच दशमी स्मृता।
उकारप्रभवा विष्णुजाताः स्युः स्थितये कलाः॥
तीक्ष्णा रौद्री भया निद्रा क्षुत्तृष्णा क्रोधिनी प्रिया।
उत्कारी मृत्युरित्युक्ता पयवर्गाः कला दश॥
मकारप्रभवा रुद्रजाताः संहृतये कलाः।
शवर्गस्य चतस्रः स्युः पीता श्वेतारुणा सिता॥
सवर्गगास्ततस्तिस्रः सुस्थिरा तारिणी सिता।
कलाश्चेश्वरसंजाता स्थिरज्ञानाय विन्दुगाः॥
निवृत्तिश्च प्रतिष्ठा च विद्या शान्ति स्तथैव च।
इन्धिका दीपिका चापि रेचिका मोचिका परा॥
सूक्ष्मा सूक्ष्मामृता ज्ञाना मृता चाप्यायिनी तथा।
व्यापिनी व्योमरूपा च विन्दन्ताः स्वरजाः कलाः॥

सदाशिवभवा नादादनुग्रहकला: क्रमात् ।
प्रथमन्तु कृते हंस: प्रतद्विष्णुरनन्तरम् ॥
त्र्यम्बकन्तु तृतीयं स्याच्चतुर्थस्तत्परादिक: ।
विष्णुर्योनिं कल्पयतु पञ्चम: कल्पनामनु: ॥
चतुर्थरतिमन्त्रा: स्युर्देवता वाक्यपूजिता: ।
मन्त्रजापस्य संप्रोक्त आत्मस्तवस्य पञ्चभि: ॥
अखैण्डकरसानन्दकरे परसुधात्मनि ।
स्वच्छन्द स्मरणे मन्त्राद्भवत्यमृतरूपिणी ॥
अकुलस्यामृताकारे शुद्धज्ञानकरे वरे ।
अमृतत्वं विधेह्यस्मिन् वस्तुनि क्लिन्नरूपिणि ॥
तद्रूपिण्यैकरूपित्वं कृत्वा चैतत् स्वरूपिणि ।
भूत्वा परामृताकारं मयि विस्फुरणं कुरु ॥
वाग्भवं पावनं भूमि: पुष्टिरिन्दु: समीरिता ।
स्थितिश्च पावकान्धश्च गत्वार्द्धेन्दुमलङ्कृता ॥
स्थिरार्च्चिषेन्दुसंयुक्ता श्वेता विन्दुयुगान्विता ।
तथामृतपदं ब्रूयात्तत्पश्चादमृतोद्भवे ॥
तथामृतेश्वरीत्युक्त्वा पश्चादमृतरूपिणि ।
अमृतं स्रावय द्वन्द्वं द्विष्ठान्तो द्रव्यशुद्धिकृत् ॥
अमृतेशि मनु: प्रोक्त: पञ्चत्रिंशद्भिरक्षरै: ।
वाग्भवं वद युग्मञ्च वाग्वादिनी तत: परम् ॥
ऐँ क्लीँ सौँ वमादीनि ऐँ क्लीँ तत: परम् ।
क्लिन्ने क्लेदय क्लेदय महाक्षोभं कुरु कुरु क्लीँ नम: ॥
मोक्षं कुरु कुरु ह्रीँ छ्रीँ ।
वाग्भवं वद युग्मञ्च वाग्वादिनीति वाग्भवम् ॥
कामराजं तत: क्लिन्ने क्लेदिनि क्लेदयेति च ।
महामोक्षं कुरुयुग्मं कामराजमत:परम् ॥

तार्त्तीयं मोक्षशब्दान्ते कुरु युग्मं वदेत्ततः।
स्यात् प्रासादपरा चान्ते सप्तत्रिंशद्भिरक्षरैः
दीपनीमनुरीत्युक्तः सर्वसिद्धिकरः प्रिये!
एताः कला मातृकाप्यथकादिका मनूनपि।
अमृतेशी दीपनीञ्च मूलमन्त्रमपि क्रमात्।
एकद्वित्रिचतुः पञ्च त्रिचत्वारिकमम्बिके!।
संस्पृष्टाभ्यर्च्च्य पात्रन्तु पूजयेद्धेनुमुद्रया।
ब्रह्माण्डखण्डसम्भूतमशेषरससम्भृतम्॥
आपूरितं महाग्रासं पीयूषरसभावहम्।
शुद्धद्रव्येण तेनापि शुद्धपुष्पाक्षतैरपि॥
न्यासोक्तसर्वमन्त्रैश्चाप्यात्मानं पूजयेत् प्रिये!।
मूर्द्ध्नि श्रीगुरुपङ्क्तीश्च मूलाधारे च पादुकाम्।
दिव्यौघे चादिनाथश्च तच्छक्तिश्च सदाशिवः।
तत्पत्नी चेश्वरस्तस्या भार्य्या रुद्रश्च तद्वधूः॥
विष्णुश्च तत्प्रिया ब्रह्मा तत्कान्ता द्वादशे स्थिता।
सिद्धौघे सनकश्चैव सनन्दश्च सनातनः॥
सनत्कुमारश्च सनत्सुजातश्च ऋतुः स्मृतः।
दत्तात्रेयो रैवतको वामदेवस्ततःपरम्॥
ततो व्यासश्च शुक्रश्च एकादश समीरिताः।
मानवौघे नृसिंहश्च महेशो भास्करस्तथा॥
महेन्द्रो माधवो विष्णुः षड़ेते च प्रकीर्त्तिताः।
नमोऽन्ते पूजयेद्देवि! दिव्यौघे परमः शिवः॥
महाशिवश्च सिद्धौघे मानवौघे सदाशिवः।
ततः पीठं समभ्यर्च्च्य देवीमावाहयेत् प्रिये!॥
महापद्मवनान्तस्थे कारणानन्दविग्रहे।
सर्वभूतहिते मातरेह्येहि परमेश्वरि!॥

देवेशि ! भक्तिसुलभे परिवारसमन्विते ।
यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरा भव ॥
मन्त्रेणानेन चावाह्य यजेद्देवीमनन्यधीः ।
ध्यात्वा मुद्रां प्रदर्श्याथ गन्धपुष्पाक्षतादिभिः ॥
चिन्मयस्याप्रमेयस्य निर्गुणस्य शरीरिणः ।
साधकानां हितार्थाय ब्रह्मणो रूपकल्पना ॥
कुण्डस्थण्डिलयोर्मध्ये शूर्पकुड्यपटेषु वा ।
मण्डले फलके मूर्द्धि हृदयेषु प्रकीर्त्तिताः ॥
एषु स्थानेषु देवेशि ! यजन्ति परमं शिवम् ।
अरूपं रूपिणं कृत्वा कर्मकाण्डरता नराः ॥
गवां सर्वाङ्गजं क्षीरं स्रावयेत्तन्मुखे यथा ।
तथा सर्वाङ्गगोदेवः प्रतिमादिषु राजते ॥
आभिरूप्याच्च बिम्बस्य पूजायाश्च विशेषतः ।
साधकस्य च विश्वासात् सान्निका देवता भवेत् ॥
गवां सर्पिः शरीरस्थं न करोत्यङ्गपोषणम् ।
स्वकर्मरचितं दत्तं महत्स्वामेव पोषणम् ॥
स्वकर्मरचितं दत्तं पुनस्त्वामेव पोषयेत् ।
एवं सर्वशरीरस्थमात्मनः परमेश्वरि ! ॥
विना च समयं देवि ! न ददाति फलं नृणाम् ।
सकलीकृत्य तत्प्राणांस्तदीयानीन्द्रियाणि च ॥
प्रतिष्ठाप्यार्चयेद्देवि ! चान्यथा निष्फलं भवेत् ।
मन्त्रहीनं क्रियाहीनं क्रियामुक्तिफलप्रदम् ॥
क्षमया साधयेत् सर्वं हीनमङ्गपदं वदेत् ।
नियमादतिरेकेण यद्यत्कर्म करोति यः ॥
न किञ्चिदप्यस्य फलं सिध्यति क्रमशेषतः ।
न्यूनातिरिक्तकर्माणि न फलन्ति कदाचन ॥

यथा करफलादीनि सत्कर्माणि फलन्ति हि।
तद्विधानं कृतं कर्म जपहोमार्च्चनादिषु॥
देवता प्रीतिदा भूयाद्भुक्तिमुक्तिफलप्रदा।
देवञ्च यन्त्ररूपञ्च मन्त्रव्याप्तिमजानताम्॥
कृतार्च्चनादिकं सर्वं व्यर्थं भवति शाम्भवि।
यन्त्रं मन्त्रमयं प्रोक्तं देवतामन्त्ररूपिणी॥
मन्त्रवत् पूजिता देवि! सहसैव प्रसीदति।
कामक्रोधादिदोषस्य सर्वदुःखनियन्त्रणात्॥
यन्त्रमित्याहुरेतस्मिन् देवः प्रीणाति पूजितः।
शरीरमिव जीवस्य दीपस्य स्नेहवत् प्रिये!॥
सर्वेषामपि देवानां यथा यन्त्रप्रतिष्ठितम्।
तस्माद्यन्त्रं लिखित्वा वा पूजयेत् परमं शिवम्॥
ज्ञात्वा गुरुमुखात्सर्वं पूजयेद्विधिना प्रिये!।
एकपीठे पृथक् पूजां विना यन्त्रं करोति यः॥
अङ्गहानिमपि त्यक्त्वा देवताशापमाप्नुयात्।
एकपीठे कुलेशानि स्वे स्वे यन्त्रे पृथक् पृथक्॥
यजेदावरणोपेतान् देवान् तद्विधिना ततः।
आवाह्य देवतामेकां अर्च्चयेदन्यदेवताम्॥
उभाभ्यां लभते शापं मन्त्रचञ्चलमानसः।
इत्यादि लक्षणं ज्ञात्वा गुरुतः शास्त्रतः प्रिये!॥
विधानेनार्च्चयेत् सम्यग्देवता सुप्रसीदति।
षोड़शैरुपचारैस्तु साङ्गं सावरणं प्रिये!॥
पूजयेन्मूलमन्त्रेण गन्धपुष्पाक्षतादिभिः।
महाषोड़ोदिताशेषपरिवारांश्च शाम्भवि॥
प्रणवादि नमोऽन्तेन तत्तदाम्नायमर्च्चयेत्।
आगमोक्तेन मार्गेण तर्पयेदलिबिन्दुना॥

अङ्गुष्ठानामिकाभ्याञ्च नखे निःसृतमूर्द्धतः ।
स्वपात्रस्पन्दनिस्यन्दं विधिवत् कुलनायिके ॥
सक्तत्तर्पणमुत्सृज्य जप्त्वा मूलञ्च पादुकाम् ।
अन्तःशक्तिमनुस्मृत्य तर्पयेद्वीरदेवताः ॥
अङ्गुष्ठो भैरवो देवोऽनामाचण्डिकाप्रिये ।
अनामाङ्गुष्ठयोगेन तत्तत् कुलजसन्ततिम् ॥
अङ्गुष्ठानामिकाभ्याञ्च वश्यकर्मणि तर्पयेत् ।
तर्जन्यङ्गुष्ठयोगेन तर्पयेदभिचारके ॥
कनिष्ठाङ्गुष्ठयोगेन स्तम्भने तर्पयेत् प्रिये ! ।
एवं सन्तर्प्य देवेशि ! कुलद्रव्यैर्यथाविधि ॥
देवतापुरतो देवि ! गुरुपंक्तीश्च तर्पयेत् ।
पंक्तित्रयक्रमेणाथ ज्ञात्वा सम्यगनन्यधीः ॥
हस्ताभ्यां धेनुमुद्रां धनुरपि कपालञ्च दधतीम्
द्रुतस्वर्णप्रख्यामरुणकुसुमालेपवसनाम् ॥
कृपापूर्णापाङ्गामरुणनयनामम्बरजटा-
मुपेतां सिद्धौघैर्यजत गुरुपंक्तिं क्रमगतिम् ॥
एवं संपूज्य धूपञ्च दीपं नैवेद्यमेव च ।
आसवं पिशितोपेतं भक्ष्याणि विविधानि च ॥
कदल्यादि फलान्येव ताम्बूलञ्च समर्पयेत् ।
इति ते कथितं देवि ! कुलाचारस्य लक्षणम् ।
कुलद्रव्यादिसंस्कारं किमन्यत् श्रोतुमिच्छसि ॥

इति कुलार्णवे महारहस्ये द्रव्यसंस्कारविधि कथनं नाम षष्ठोल्लासः ।

---

## सप्तम उल्लासः ।

देव्युवाच । कुलेश ! वटुकादीनां वलिञ्च शक्तिलक्षणम् ।
तद्द्रव्यस्यैव स्वीकारं वद मे करुणानिधे ! ॥

ईश्वर उवाच । शृणु देवि ! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण तत्त्वज्ञानं प्रकाशते ॥
यावन्तो वटुके दद्यात्तावन्नैव कुलेश्वरि ! ।
तृप्यन्ति देवताः सर्वाः स्मरणाद् यजनादपि ॥
वटुकादीन् यजेत्तस्माद्गन्धपुष्पासवामिषैः ।
तत्तन्मन्त्रैर्विधानेन देवता प्रीतिमाप्नुयात् ॥
यत्किञ्चिद्द्रव्यसङ्घातं पूजार्थं भोगहेतुना ।
आनीतं दीयते भक्त्या चैतेभ्यश्च कुलेश्वरि ! ॥
वटुकमन्त्रान् वक्ष्यामि शृणुष्व कुलनायिके ! ।
यैः समर्चितमात्रेण सर्वे नश्यन्त्युपद्रवाः ॥
तारत्रयं ततो देवी पुत्रेति वटुकेति च ।
नाथश्च कपिलजटाभारभासुरपिङ्गल ! ॥
त्रिनेत्रेति पदं पश्चात् ज्वालामुखपदं ततः ।
इमां पूजां बलिं गृह्ण द्वयं पावकवल्लभा ॥
उक्तो वटुकमन्त्रोऽयं चत्वारिंशद्भिरक्षरैः ।
बलिनानेन सन्तुष्टो वटुकः सर्वसिद्धिदः ॥
शान्तिं करोतु मे नित्यं भूतवेतालसेवितः ।
तारत्रयं ततः सर्वयोगिनीभ्यः पदं वदेत् ॥
तत्पश्चात् सर्वभूतेभ्यः सर्वभूताधिपाय च ।
पदं ततो डाकिनीभ्यः शाकिनीभ्यः पदं वदेत् ॥
त्रैलोक्यविपदं चैव वासिनीभ्य इमां वदेत् ।
पूजां बलिं गृह्ण युग्मं स्वाहान्तो योगिनीमनुः ॥
कथितोऽयं महेशानि ! मन्त्रः पञ्चदशाक्षरः ।
या काचिद् योगिनी रौद्रा सौम्या सौम्यतरा यदि ॥
खेचरी भूचरी व्योमचरी प्रीतास्तु मे सदा ।
तारत्रयं वदेत् सर्वभूतेभ्यः सर्व एव हि ॥

पश्चाद्भूतपतिभ्यो हुँ फट्, सप्तदशाक्षरः ।
भूता ये विविधाकारा दिक्षु भौमान्तरीक्षगाः ॥
पातालसंस्था ये केचिच्छिवे ! ये च न भाविताः ।
ब्रह्माद्याः सत्यसन्धाश्च भृत्याः शक्त्युपबृंहिताः ॥
तृप्यन्तु प्रीतमनसः प्रतिगृह्णन्त्विमं बलिम् ।
तारत्रयं ततो देवि ! युग्मं देवीपदं वदेत् ।
सर्वविघ्नान् पदं पश्चान्नाशय द्वितीयं तथा ॥
सर्वोपचारसहितामिमां पूजां बलिं वदेत् ।
गृह्ण गृह्ण द्विठान्तोऽयं भैरवाधिष्ठिताय च ॥
अक्षोभ्यवन्दितः पश्चाद् हृदयाधिष्ठितं परम् ।
सिद्धार्थं पदमाभाष्य पश्चादवतर द्वयम् ॥
क्षेत्रपालद्वयं पश्चान्महाक्षेत्रपदं ततः ।
अस्मिन् ग्रामाधिपतयेऽस्मिन् देशाधिपतये ततः ॥
वदेद्बटुकनाथेति देवीपुत्रपदं ततः ।
मेघनादपदं पश्चात् प्रचण्डोग्रपदं वदेत् ॥
कपालीति पदं पश्चाद्भीषणेति पदं वदेत् ।
स्यात् सर्वविघ्नाधिपतये इमां पूजा बलिं वदेत् ॥
गृह्ण गृह्ण कुरु द्वन्द्वं मम दूरय युग्मकम् ।
ज्वलयुग्मं प्रज्वलयुग्मं सर्वविघ्नानितीरयेत् ॥
नाशय द्वितयं क्षां क्षीं क्षृं क्षैं क्षौं क्षन्ततः परम् ।
मातृपुत्रपदं पश्चात् कुलपुत्रपदं ततः ॥
क्षेत्रपालाय वौषट् हुँ षडुत्तरशताक्षरः ।
तारत्रयं वदेत् पश्चादमुक ! क्षेत्रपाल ! च ॥
राजराजेश्वर ! इमं पूजां बलिमतः परम् ।
गृह्ण युग्मं द्विठान्तोऽयमष्टाविंशाक्षरो मनुः ॥
अनेन बलिदानेन वटुवक्त्रसमन्वितः ।

राजराजेश्वरो देवो मे प्रसीदतु सर्वदा ॥
पश्चिमे वटुकं देवमुत्तरे योगिनीबलिम्।
पूर्वे भूतबलिं दद्यात् क्षेत्रपालञ्च दक्षिणे ॥
राजराजेश्वरं मध्ये पूजयेत् कुलनायिके!।
अङ्गुष्ठानामिकाभ्याञ्च वटुकस्य बलिः स्मृतः ॥
तर्जनीमध्यमानामा अङ्गुष्ठौ योगिनीबलिः।
अङ्गुलीभिश्च सर्वाभिरुक्तो भूतबलिः प्रिये!॥
अङ्गुष्ठतर्जनीभ्याञ्च क्षेत्रपालबलिं हरेत्।
अङ्गुष्ठमध्यमाभ्याञ्च राजराजेश्वरस्य च ॥
वटुकादीन् समर्च्यैवं कुलदीपान् समर्चयेत्।
ईषत्पललपिष्टेन कुर्य्याद्विदाङ्गुलान्वितान् ॥
दीपान् डमरुकाकारान् त्रिकोणानतिशोभितान्।
कर्षाज्यग्राहिणः कुर्य्यान्नव सप्ताथ पञ्च वा ॥
अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभान्।
त्रिधा देव्युपरि भ्राम्यन् कुलदीपान्निवेदयेत् ॥
समस्तचक्रचक्रेशियुते! देवि! कुलात्मिके!।
आरात्रिकमिदं देवि! गृहाण मम सिद्धये ॥
कुलदीपान् प्रदर्श्याथ शक्तिपूजां समाचरेत्।
स्वशक्तिं वीरशक्तिं वा दीक्षिताञ्च विशेषतः ॥
पाययित्वा पिबेन्मद्यमिति शास्त्रस्य निश्चयः।
अभ्यर्च्य देवताबुद्ध्या मद्यसंस्कारमम्बिके!॥
मन्त्रदीक्षाविधानैश्च सिद्धो भवति नान्यथा।
तस्मात् सुलक्षणां शक्तिं गन्धपुष्पाक्षतादिभिः ॥
अभ्यर्च्य देवताबुद्ध्या भोगपात्रं निवेदयेत्।
तदन्ते कन्यकाश्चापि प्रमदाश्च मनोहराः ॥
सम्पूज्य देवताबुद्ध्या दद्यात् पात्रं पृथक् पृथक्।

अनिवेद्य तु यः शक्तौ कुलद्रव्यं निषेवते ॥
पूजितं निष्फलं तस्य देवता न प्रसीदति ।
चण्डाली कर्मचारी च मातङ्गी पुक्कसी तथा ॥
श्वपची खट्टकी चैव कैवर्त्ती विश्वयोषितः ।
कुलाष्टकमिदं प्रोक्तं स्वकुलाष्टकमुच्यते ॥
कौञ्चिकी शौण्डिकी चैव शस्त्रजीवी च रञ्जकी ।
गायकी रजकी शिल्पी कैशरी च तथाष्टमी ॥
तन्त्रमन्त्रसमायुक्ता समयाचारपालिका ।
कुमारी च व्रतस्था च योगमुद्राधरापि वा ॥
पूजाकालेषु ताः प्रोक्ताः सा ज्ञेया सहजा बुधैः ।
उक्तजात्यङ्गनाभावे चतुर्वर्णाङ्गनां यजेत् ॥
सुरूपा तरुणी कान्ता स्वकुलाद्युदिता शुचिः ।
शङ्काहीना भक्तियुता गूढ़शास्त्रोपयोगिनी ॥
अलोलुपा सुशीला च स्मितास्या प्रियवादिनी ।
गुरुदैवतसङ्गता सुचित्ता कौलिकप्रिया ॥
विमत्सरा विशेषज्ञा देवतासाधनोत्सुका ।
मनोहरा सदाचारा शक्तिरेका सुलक्षणा ॥
दुष्टोग्रा कर्कशा स्तब्धा कुत्सिता कुलदूषिता ।
पराधीना भावहीना दुराचारातुरालसा ॥
निद्राशक्तातिदुर्मेधा हीनाङ्गी व्याधिपीड़िता ।
दुर्गन्धा दुःखिता मूढ़ा वृद्धोन्मत्तरहस्यभित् ॥
कुतर्का कुत्सितालापा निर्लज्जा कलहप्रिया ।
विरूपोन्मार्गगा दुष्टा पङ्ग्वन्धविकृतानना ॥
ईदृशीं मन्त्रयुक्ताञ्च शक्तियोगे विवर्जयेत् ।
ततोऽर्चनादिकं सर्वं मन्त्रादेशपुरःसरम् ॥
इति पूर्वादिमनुना मन्त्री देव्यै निवेदयेत् ।

लारत्रयमितः पूर्वं प्राणबुद्धी ततः परम् ॥
देहधर्माधिकारान्ते जाग्रत्स्वप्नसुषुप्तिषु ।
मनसा च ततो वाचा कर्म्मणा तत्परं वदेत् ॥
हस्ताभ्याञ्च ततः पद्भ्यामुदरेण ततः परम् ।
शिश्ना च यत् कृतं पश्चाद्यदुक्तं यत् कृतं वदेत् ॥
तत् सर्वं गुरुदेवाल्लं मत्समर्पितमस्त्विति ।
स्वाहान्तो मनुरित्युक्तस्त्रिसप्तद्व्यक्षरः प्रिये ! ॥
ज्ञानतोऽज्ञानतो वापि यन्मया क्रियते सदा ।
तव कृत्यमिदं सर्वमिति मातः ! क्षमस्व मे ॥
एवं सम्प्रार्थ्य देवेशि ! स्तुत्वा नत्वा च भक्तितः ।
प्रधानदेवतामूर्त्तौ परिवारान् समर्पयेत् ॥
एवं सावरणां देवीं चिन्तयेद् हृदयाम्बुजे ।
शेषिकायै समर्प्याथ मूलमन्त्रेण शोधयेत् ॥
स्मृत्वा गुरुपदुच्छिष्टचाण्डाली तदनन्तरम् ।
वदेन्मातङ्गि ! सर्वान्ते वशङ्करि ! च युग्मकम् ॥
एकविंशतिवर्णैश्च शेषिकामनुरीरितः ।
मन्त्रेणानेन निर्माल्यं शेषिकायै समर्पयेत् ॥
देवीमुच्छिष्टमातङ्गीं ध्यायेत् कौलिकमोहिनीम् ।
वीणावाद्यविनोदवाद्यनिरतां नीलांशुकोल्लासिनीम्
बिम्बोष्ठीं नवयावकार्द्रचरणामाकीर्णकेशाननाम् ।
मृदङ्गीं सितशङ्खकुण्डलधरां माणिक्यपुष्पोज्ज्वलाम्
मातङ्गीं प्रणमामि सस्मितमुखीं देवीं शुकश्यामलाम् ॥
ततः श्रीगुरुपादाय साक्षात् परशिवाय च ॥
कराभ्यां पात्रमुद्धृत्य सद्वितीयं समर्पयेत् ।
सत्सम्प्रदायसंयुक्तैर्वीरैश्च सह पूजनम् ॥
अन्योन्यवन्दनं कृत्वा पिबेच्च तदनुज्ञया ।

सव्येनोद्धृत्य पात्रन्तु मुद्रां कृत्वापसव्यतः ॥
यथाविधि द्वितीयेन गृह्णीयान्मन्त्रमुच्चरन् ।
पिशितं मांसपात्रन्तु मद्यं चुलुकसन्निभम् ॥
आत्मदेहत्रयं तद्वत्त्रयेणाथ विशोधकम् ।
तरुणोल्लाससहितः प्रसन्नवदनेक्षणः ॥
गुरुः शिष्यान् समाहूय दद्यात्तत्त्वत्रयं पिबेत् ।
शिष्योपायनमादाय शुद्धात्मा कुसुमादिकम् ॥
यथाशक्ति विनीतात्मा वित्तशाठ्यविवर्जितः ।
प्रणम्य वहिरष्टाङ्गं प्रविश्यान्तः शनैः प्रिये ! ॥
समर्प्योपायनं भक्त्या शिवाय गुरुरूपिणे ।
गृहीत्वाङ्गुष्ठकौ कृत्वा करौ नम्राग्रतर्जनी ॥
जानुभ्यामवनिं गत्वा पश्चाङ्गं प्रणमेद्गुरुम् ।
वामाङ्गुष्ठानामिकाभ्यां दक्षहस्तप्रसारितम् ॥
स्पृष्ट्वा विशुद्धहृदयमीषदानतमस्तकम् ।
वामाङ्गुष्ठानामिकाभ्यां शिष्याय श्रीगुरुः प्रिये ! ॥
प्रकृत्याद्यैः पृथिव्यन्तैश्चतुर्विंशतिभिः शिवैः ।
स्वरैर्विशुद्धितत्त्वैश्च वाग्भवैर्नकुलेश्वरि ! ॥
संयुक्तेनाथ तत्त्वेन स्थूलदेहं विशोधयेत् ।
मायादिपुरुषान्तैश्च शुद्धाशुद्धैश्च सप्तभिः ॥
तत्त्वैः स्पर्शाद्ययैर्वर्णैः कामराजेन मन्त्रवित् ।
युक्तेन विद्यातत्त्वेन सूक्ष्मदेहं विशोधयेत् ॥
शिवादिशुद्धविद्यान्तैः पञ्चतत्त्वैश्च व्यापकम् ।
परया शिवतत्त्वेन परं देहं विशोधयेत् ।
षट्त्रिंशत्तत्त्वसहितमालिन्याऽवलया प्रिये ! ।
तत्त्वत्रयाश्रितं वीजं सर्वतत्त्वं विशोधयेत् ।
शोधयेत्त्रिपदञ्चाथ सद्वितीयानिलागुरुः ॥
चुलुकं गुरुणा दत्तं शोधयामीति चोच्चरन् ।

भक्त्या चावनतः शिष्यो निःशब्दं त्रिः पिबेदलिम्॥
पाणिभ्यां संस्पृशेद्देहं सर्वतत्त्वं समुच्चरन्।
शिरःप्रभृतिपादान्तं शुद्धं देहं विशोधयेत्॥
स्खलन्ति तत्त्वमत्रं स्यात् सूक्ष्मं विद्यान्तगोचरम्।
परान्तं शिवतत्त्वं स्यादिति तत्त्वत्रयं जगत्॥
एवं तत्त्वत्रयज्ञानं गुरोर्ज्ञात्वा य आचरेत्।
स जीवन्नेव मुक्तः स्यादिति शङ्करभाषितम्॥
ततः स्वीकृत्य च गुरुः शिष्येभ्यः शेषदो भवेत्।
आदाय गुरुणा दत्तं सद्द्वितीयासवं पिबेत्॥
श्रीगुरुज्येष्ठपूजाभ्यां सर्वतः कुलनायिके!।
नोपविश्य पिबेन्मद्यं प्रायश्चित्तीभवेत् प्रिये!॥
तस्मान्मन्त्रविधानेन कर्त्तव्यं कुलनायिके!।
इदं पवित्रममृतं जगतां परभेषजम्॥
पशुपाशभवोच्छेदकारणं भैरवोदितम्।
चित्ते स्वातन्त्र्यरूपत्वात्तदानन्दमयः स्वतः॥
तन्मयत्वाच्च भावानां भावाच्चान्तरितासवे।
स्वस्वातन्त्र्यविकाशाय स्वरसस्तेन पीयते॥
तस्मादिमां सुरां देवीं पूर्णोऽहं त्वां पिबाम्यतः।
मन्त्रेणानेन देवेशि! मूलमन्त्रेण मन्त्रवित्॥
अनाकुलमनाः कुर्य्यादलिपानं शनैः शनैः।
तस्मान्मूलत्रिकोणस्थे कोटिसूर्य्यसमप्रभे॥
कुण्डलाकृतिचिद्रूपे ह्युमिदद्रव्यं समन्त्रकम्।
अहन्तापात्रभरितमिदन्तापरमामृतम्॥
पराहन्तामये वह्नौ होमे स्वीकारलक्षणम्।
गुरुदैवतमन्त्राणामैक्यं सञ्चिन्तयेद्धिया॥
यावदुल्लासपर्य्यन्तमुपदेशे पिबेन्मधु।

चरुकः सिद्धिदः प्रोक्तो दीपज्ञानप्रदो भवेत् ॥
पानात्परपदप्राप्तिः कुलेषु लय ईरितः।
भोजनान्ते विषं मद्यं मद्यान्ते भोजनं विषम् ॥
अमृतं तद्विजानीद्‌यदन्नं मधुना सह ।
चर्वणेन युतं पानममृतं कथितं प्रिये ! ॥
चर्वणेन विना पानं केवलं विषभक्षणम् ।
पानञ्च त्रिविधं प्रोक्तं दिव्यवीरपशुक्रमात् ॥
दिव्यं देव्यग्रतः पानं वीरं स्वहासने कृतम् ।
स्वेच्छया पशुवत्पानं पशुपानमितीरितम् ॥
भुक्तिमुक्तिप्रदं दिव्यं वीरं मुक्तिप्रदं प्रिये !
पशुपानं नारकीयमेवं पानफलं प्रिये ! ॥
दृष्टिमानसवाक्काये यावन्नो भवति भ्रमः ।
तावत्पानं प्रकुर्वीत पशुपानमतः परम् ॥
यावन्नेन्द्रियवैकल्यं यावन्नो मुखविक्रिया ।
तावद्‌ यः पिबते मद्यं स मुक्तो नात्र संशयः ॥
पीत्वा पीत्वा पुनः पीत्वा यावत् पतति भूतले ।
उत्थाय च पुनः पीत्वा पुनर्जन्म न विद्यते ॥
आनन्दात्तृप्यते देवी मूर्च्छनाद्भैरवः स्वयम् ।
वमनात् सर्वदेवाश्च तस्मात्त्रिविधमाचरेत् ॥
दिव्यपानरतानां वै यत्सुखं कुलयोगिनाम् ।
तत् सुखं सार्वभौमस्य नृपस्यापि न विद्यते ॥
यत् सुखं कुलनिष्ठानां कुलद्रव्यनिषेवणात् ।
तत्सौख्यमेव मोक्षः स्यात् सत्यमेव वरानने ! ॥
इति ते कथितं सम्यक् वटुशक्त्यादिपूजनम्।
समासेन कुलेशानि ! किम्भूयः श्रोतुमिच्छसि ॥

इति कुलार्णवे महारहस्ये वटुकशक्त्यादिपूजनं नाम सप्तम उल्लासः ।

## अष्टम उल्लासः ।

देव्युवाच । कुलेश ! श्रोतुमिच्छामि करुणामृतवारिधे ! ।
उल्लासभेदं द्रव्यस्य द्रव्यपात्रादिसङ्गमम् ॥
रत्युल्लासक्रमेवञ्च श्रीचक्रस्थितिरेव च ।
चेष्टां कौलिकशक्तीनां वद मे परमेश्वर ! ॥
ईश्वर-उवाच । शृणु देवि ! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण जायते दिव्यभावना ॥
आरम्भस्तरुणश्चैव यौवनः प्रौढ़ एव च ।
तदन्तश्चोन्मनाश्चैव मनोल्लासश्च सप्तमः ॥
तत्त्वत्रयं स्यादारम्भः कथितः कुलनायिके ! ।
कथितस्तरुणोल्लासस्तरुणं सुखमम्बिके ! ॥
यौवनं मनसः सम्यगुल्लासः सुस्थितिः प्रिये ! ।
स्खलनं दृङ्मनोवाचां प्रौढ़ इत्यभिधीयते ॥
समुल्लासे स्थिते चक्रे यदीच्छेत् पात्रमेलनम् ।
अदीक्षितैरनाचारैरतत्त्वज्ञैरदैवतैः ॥
दूषकैः समरभ्रष्टैर्न कुर्य्याद्द्रव्यसङ्गतिम् ।
अभिज्ञमन्यमानैश्च प्रपञ्चव्रतधारिभिः ॥
पशुभिः क्षुद्रकर्मस्थैर्न कुर्य्यात् पात्रसङ्गतिम् ।
स्त्रीद्विष्टैर्गुरुभिः शप्तैर्भ्रातृहीनैर्दुरात्मभिः ॥
कुलोपदेशहीनैश्च न कुर्य्याद्द्रव्यसङ्गतिम् ।
पदवाक्यप्रमाणज्ञः श्रुतिस्मृत्यर्थवित्तमः ॥
कुलधर्मानभिज्ञश्चेत्तत्सङ्गं परिवर्जयेत् ।
तत्कुले च प्रसूता वा वृद्धाचारप्रवर्त्तकाः ॥
त्वत्पूजाविमुखाः स्युश्चेत्तत्संसर्गं परित्यजेत् ।
स्त्रीपुत्रमित्रबन्धूनां स्निग्धानामपि पार्वति ! ॥
कुलाचारानभिज्ञानां सङ्गतिं वर्जयेत् प्रिये ! ।

अदृष्टपुरुषाणाञ्च देशान्तरनिवासिनाम् ॥
विना सङ्केतयोगेन न कुर्य्याद्द्रव्यसङ्गतिम् ।
एकपात्रं न कुर्वीत यदि साक्षात् कुलेश्वरः ॥
मन्त्राः पराङ्मुखास्तस्य विघ्नश्चैव पदे पदे ।
स्वपात्रस्थितहेतुञ्च न दद्याद्भैरवाय च ॥
यदि दद्यात् कुलेशानि ! देवताशापमाप्नुयात् ।
आसनं भोजनं पात्रमुपानच्छयनानि च ॥
अनभिज्ञैरनर्हैश्च सङ्गमं नैव कारयेत् ।
स्रोतोभेदेन वा कुर्य्यात् कौलिकैः पात्रमेलनम् ॥
यदृच्छया तु सम्प्राप्तमलिपात्रन्तु भक्तितः ।
आदाय पूर्ववद्देवि ! गुरुं स्वञ्च स्मरेत् प्रिये ! ॥
गुरुशक्तिसुतानाञ्च गुरुज्येष्ठकनिष्ठयोः ।
उच्छिष्टं भक्षयेत् स्त्रीणां ताभ्यो नोच्छिष्टमर्पयेत् ॥
चक्रमध्येऽपि देवेशि ! नान्यथा पतनं भवेत् ।
कनिष्ठानान्तु शिष्याणां दद्यादुच्छिष्टमम्बिके ! ॥
दद्यात् स्नेहेन योऽन्येभ्यः स भवेदापदां पदम् ।
आसनोच्छिष्टपात्रन्तु यो गृह्णाति विमूढधीः ॥
स्नेहाल्लोभाद्भयाद्वापि देवताशापमाप्नुयात् ।
प्रौढोल्लासे महादेवि ! कुर्य्यादलिविवर्जनम् ॥
पूजागृहाद्बहिः कुर्य्यात्त्रिकोणं वा गृहान्तरे ।
गन्धपुष्पाक्षतैः शिष्यो ध्यायेदुच्छिष्टभैरवम् ॥
गदात्रिशूलडमरुपात्रहस्तं त्रिलोचनम् ।
कृष्णाभं भैरवं ध्यायेत् सर्वविघ्ननिवारणम् ॥
तारत्रयं समुच्चार्य्य पश्चादुच्छिष्टभैरवम् ।
एहि युग्मं बलिं गृह्ण युग्मं फट् च द्विठान्तकम् ॥
बल्युद्वासनमन्त्रोऽयं द्वाविंशतिभिरक्षरैः ।

शान्तिस्तवं पठेत् पश्चात्तर्पयेदलिविन्दुभिः ॥
यजन्ति देव्यो हरपादपङ्कजं प्रसन्नवामस्थितमोक्षदायकम्।
अनन्तसिद्धान्तमतिप्रबोधकं नमामि चक्राष्टकयोगिनीशम् ॥
योगिनीचक्रमध्यस्थं मातृमण्डलवेष्टितम् ।
नमामि शिरसा नाथं भैरवं भैरवीप्रियम् ॥
अनादिघोरसंसारपरिध्वंसैकहेतवे ।
नमः श्रीनाथवैद्याय कुलौषधिविधायिने ॥
आपदो दुरितं रोगाः समयाचारलङ्घनात् ।
तत्सर्वाणि व्यपोहन्तु दिव्यचक्रस्य मेलनात् ॥
नन्दन्तु साधककुलान्यलिमात्मनिष्ठाम्
पापा जहन्तु समयाद्विषि योगिनीनाम् ।
सा शाम्भवी स्फुरतु कापि ममाप्यवस्था
यस्यां गुरोश्चरणपङ्कजमेव सेव्यम् ॥
नन्दन्तु सिद्धगुरवस्तदनुक्रमौघाः
ज्येष्ठानुगाः समयिनो बटुकाः कुमार्य्यः ।
यद्योगिनीप्रवरवीरकुलप्रसूता
आचार्य्यभूमिपतयो द्विजसाधुलोकाः ॥
नन्दन्तु साधुकुलमर्मरताः परे ये
चान्ये विशेषपदभेदकशाम्भवाय ॥
नन्दन्तु साधकाः सर्वे नश्यन्तु कुलदूषकाः ।
अवस्था शाम्भवीयास्तु प्रसन्नोऽस्तु गुरुः सदा ॥
यद्येषा भैरवी देवी यदि भैरवशासनम् ।
यद्येष कुलधर्मः स्यात्तदा नश्यन्तु दूषकाः ॥
यासामाज्ञाप्रभावेण स्थास्थितं भुवनत्रयम् ।
नमस्ताभ्यः समस्ताभ्यो योगिनीभ्यो निरन्तरम् ॥
याश्चक्रक्रमभूमिकावसतयो नाड़ीषु याः संस्थिताः

या: कायोद्गतरोमकूपनिलया या: संस्थिता धातुषु।
उच्छ्वासोर्मिमहातरङ्गनिलया निश्वासवासाश्च या-
स्ता देव्यो रिपुपक्षभक्षणपरास्तृप्यन्तु मन्त्रार्च्चिता: ॥
या देव्य: कुलसम्भवा: चितिगता या देवतास्तोयगा
या नित्या मुदितप्रभा निधिगता या या भुवि प्रस्थिता: ।
या व्योमाहितमण्डलामृतमया या: सर्वगा: सर्वदा:
ता देव्य: कुलमार्गपालनपरा: शान्तिं प्रयच्छन्तु मे ॥
ब्रह्मा श्री: शेषदुर्गागुहवटुकगणा भैरवा: क्षेत्रपाद्या-
रुद्रादित्या ग्रहास्ते वसुपतमुनय: सिद्धयो गुह्यकाद्या: ।
भूता गन्धर्वविद्याधरऋषिपितर: किन्नरा यक्षनागा
योगीशाश्चारणाद्या: सुरकरनिकरा: पूजने सन्तु तुष्टा: ॥
देहस्थाखिलदेवता गजमुखा: क्षेत्राधिपा भैरवा
योगिन्यो वटुकाश्च यक्षपितरो भूता: पिशाचा ग्रहा: ।
अन्ये भूचरखेचरा दिशिचरा वेतालकाश्चेटका-
स्तृप्यन्तां कुलपुत्रकस्य पितर: पीत्वा समीपे चरुम् ।
ऊर्द्ध ब्रह्माण्डतो वा दिवि गगनतले भूतले निष्कले वा
पाताले वा तले वा सलिलपवनयोर्यत्र कुत्र स्थितो वा ।
तीर्थे पीठोपपीठादिषु च कृतपदास्ते सुरा: सर्वपूज्या:
स्तृप्यन्तु ज्ञानदेव्यस्त्वलिबलिपिशितैर्धूपदीपादिकेन ॥
सत्यं चेद्गुरुवाक्यमेव चतुरो वेदागमा योगिनो
मन्त्राश्चेत् परदेवता यदि भवेद्ब्रह्म प्रमाणं हि चेत् ।
शास्त्रीयं यदि दर्शनं भवति चेदाम्नाप्यमायान्ति चेत्
सत्यञ्चापि च कौलधर्मपरमं स्यान्मे जय: सर्वदा ॥
पिबन्तु मातर: सर्वा: पिबन्तु कुलसत्तमा: ।
पिबन्तु भैरवा: सर्वे मम देहे व्यवस्थिता: ॥
पिबन्तु मातर: सर्वा: समुद्रा: सगणाधिपा: ।

योगिन्यः क्षेत्रपालाश्च मम देहे व्यवस्थिताः।
शिवाद्यवनिपर्य्यन्तं ब्रह्मादिस्तम्बसंयुतम्॥
कालाग्न्यादिशिवान्तञ्च जगद् यज्ञेन तृप्यतु।
पठित्वाभ्यर्चनापात्रं समुद्धृत्य गुरुः प्रिये!॥
ततो दद्यात् स्वशिष्याय प्रसादं कुलनायिके!।
स्वाभीष्टचेष्टाकरणं प्रौढ़ान्तः परिकीर्त्तितः॥
प्रौढ़ान्तो न्यासने देवैर्यदि तैर्योगमण्डले।
योगिनीमण्डलैश्चैव क्रियमाणं तदुच्यते॥
तदारूढ़ेषु वीरेषु कार्य्याकार्य्यं न विद्यते।
इच्छैव शास्त्रसम्पत्तिरित्याज्ञा परमेश्वरि!॥
तत्र यद्यत् कृतं कर्म शुभं वा यदि वाशुभम्।
तत्सर्वं देवताप्रीत्यै जायते सुरसुन्दरि!॥
जपो जल्पः फलं तन्द्राः समाधिरभिधीयते।
विक्रिया पूजनं देवि! छेदितं भैरवे बलिः॥
मुक्तिः स्याच्छक्तिसंयोगः स्तोत्रं तत्कालभाषितम्।
न्यासोऽवयवसंस्पर्शो भोजनं हवनक्रिया॥
वीक्षणं ध्यानमीशानि! शयनं वन्दनं भवेत्।
तदुल्लासरतानान्तु या चेष्टा सा च सत्क्रिया॥
कार्य्याकार्य्यविचारन्तु यः करोति स पातकी।
एतच्चक्रगता वीरा विज्ञेयाः परयोगिनः॥
ये चाप्नुवन्ति मनुजाः साक्षाद्भैरवरूपभाक्।
सम्बोधकोपशमनं पतनाङ्गारवर्जितम्॥
वेणुवीणादिवाद्यञ्च कवितारचनादिकम्।
रोदनं पतनञ्चैव समुत्थानं विजृम्भणम्॥
गमनं विक्रिया देवि! योग इत्यभिधीयते।
चक्रेऽस्मिन् योगिनो वीरा योगिन्यो मदमन्थराः॥

समाचरन्ति देवेशि! यथोल्लासं मनोगतम् ।
शनैः पृच्छति पार्श्वस्था विस्मृत्यात्मविचेष्टितम् ॥
विधाय वदने पात्रं निर्विंशानि वसन्ति च ।
यदन्यं पुरुषं मोहात् कान्तान्यमवलम्बते ॥
तस्यैव पुरुषस्यापि प्रौढ़ोल्लासेन संयुतम् ।
पुरुषः पुरुषं मोहादालिङ्गत्यङ्गनाङ्गनाम् ॥
पृच्छति स्वपतिं मुग्धा कस्त्वं काहं इमे च के ।
किं कार्य्यं वयमायाताः किमर्थमिह संस्थिताः ॥
उद्यानं किमिदं हन्त गृहं किं प्राङ्गणं किमु ।
मुखे आपूर्य्य मदिरां पाययन्ति स्त्रियः प्रियान् ॥
उपदंशं मुखे चिप्ता निचिपन्ते प्रियानने ।
गृह्णन्ति पाणिमन्योन्यं व्यञ्जनानि च शाम्भवि ! ॥
धृत्वा शिरसि नृत्यन्ति मद्यभाण्डानि योगिनः ।
सङ्गीतकरतालञ्च विस्पष्टाक्षरगीतकम् ॥
वसनास्पन्दविन्यासं नृत्यन्ति कुलशक्तयः ।
योगिनो मदमत्ताश्च पतन्ति प्रमदोपरि ॥
मदाकुलाश्च योगिन्यः पतन्ति पुरुषोपरि ।
मनोरथसुखं पूर्णं कुर्व्वन्ति च परस्परम् ॥
इत्यादिविविधां चेष्टां कुर्व्वन्ति कुलनायिके ! ।
विकृतिं मनसो हित्वा य उल्लासं प्रकुर्वते ॥
तदा तु देवताभावं भजन्ते योगिपुङ्गवाः ।
कौलिकान् भैरवावेशान् यो वा निन्दति मूढ़धीः ॥
तं नाशयन्त्यसन्देहो योगिन्यः कुलनायिके ! ।
न निन्देन्न हसेत् क्वापि चक्रे मधुमदाकुलान् ॥
एतच्चक्रगतां वार्त्तां वहिर्नैव प्रकाशयेत् ।
तेभ्यो द्रोहं न कुर्वीत नाहितञ्च समाचरेत् ॥

भक्त्या संग्राहयेत्तच्च गोपयेन्मातृजारवत्।
चक्रे मदाकुलान् दृष्ट्वा चिन्तयेद्देवताधिया॥
मोदते वन्दते भक्त्या यदीच्छेद्योगिनीपदम्।
पश्येदेवंविधं चक्रं यो भक्त्या कौलिकः प्रिये !॥
व्रततीर्थतपोदानयज्ञकोटिफलं लभेत्।
उन्मनाः पतनोत्थाने मूर्च्छना च मुहुर्मुहुः॥
उन्मनाश्च तदुल्लासे भवेत् षष्ठे समन्वितः।
चिरं संविदधाते तौ यौ हि कर्मपराच्चरौ॥
परंब्रह्मार्थसन्धानात् कालं भुङ्क्ते परं विदुः।
अन्तर्लक्ष्यो वहिर्दृष्टिर्निमेषोन्मेषवर्जितः॥
एषा तु शाम्भवी मुद्रा शिवस्य कामदायिनी।
सर्वोत्तीर्णा सदा हन्ता समासा चैव सत्कृतिः॥
अलुब्धोल्लासिनो वीराः शिवा एव न संशयः।
न किञ्चिदपि जानन्ति स्वानुष्ठानपरायणाः॥
तदायान्ति परं सौख्यं मनोवाचामगोचरम्।
स्वयमेवानुभूयन्ते शर्कराः क्षीरपानवत्॥
कीदृशं तादृशं सौख्यमिति वक्तुं न शक्यते।
दृश्यते पुलकाद्यैर्यत्तद्ब्रह्मध्यानमुच्यते॥
यत् सुखं विद्यते ध्याने देहावेशकरं परम्।
कथितुं नैव शक्नोति प्रबुद्धा तु विशेषतः॥
ब्रह्मज्ञानामृतानन्दपराः सुकृतिनो नराः।
क्षणेऽप्यन्तर्हिते तस्मिन् शोचन्त्यासंहता इव॥
सप्तमोल्लासयुक्तानां तद्भक्तानां महात्मनाम्।
अष्टौ त्रिकालज्ञानोत्थाः प्रत्ययाश्च कुलेश्वरि !॥
अष्टावस्थाश्चाथ्यपाद्या जायन्ते नात्र संशयः।
बहुनात्र किमुक्तेन अणिमाद्यष्टसिद्धयः॥

प्रतीहारपदं प्राप्ताः सेवन्ते मन्दिरं चिरम् ।
ये गुणाः परमेशस्य पञ्चवक्त्रमनोः शुभाः ॥
ते गुणाः कुलतत्त्वज्ञे ! तत्त्वज्ञानसमाहृताः ।
आरम्भस्तरुणश्चैव यौवनं प्रौढ़ एव च ॥
तदन्ते जाग्रदित्युक्तेश्चोन्मनाः स्वप्न-उच्यते ।
अनवस्थः सुषुप्तिः स्यादवस्थात्रयसंयुतात् ॥
सप्तोल्लासञ्च यो वेत्ति स मुक्तः स च कौलिकः ।
प्रवृत्ते भैरवीचक्रे सर्वे वर्णाः द्विजातयः ॥
निवृत्ते भैरवीचक्रे सर्वे वर्णाः पृथक् पृथक् ।
स्त्री वाथ पुरुषः षण्डश्चण्डालो वा द्विजोत्तमः ॥
चक्रेऽस्मिन् नैव भेदोऽस्ति सर्वे देवसमाः स्मृताः ।
नानामोदगताम्भस्तु गङ्गां प्राप्य यथैकताम् ॥
याति श्रीचक्रमध्येऽपि चैकत्वं सर्वमानवाः ।
चोरेण सहितं तोयं चोरमेव यथा भवेत् ॥
तथा श्रीचक्रमध्ये तु जातिभेदो न विद्यते ।
स्वर्गादिपुण्यलोकेषु देवादन्यद्यथा न हि ॥
तथैव चक्रमध्येऽपि देवताः सर्वमानवाः ।
जातिभेदो न चक्रेऽस्मिन् सर्वे शिवसमाः स्मृताः ॥
वेदे हि स्थितमेवं हि सर्वं हि ब्रह्म चाब्रवीत् ।
बहुनात्र किमुक्तेन चक्रमध्ये कुलेश्वरि ! ॥
मद्रूपाः पुरुषाः सर्वे त्वद्रूपाः प्रमदाः प्रिये ! ।
चक्रमध्ये तु मूढ़ात्मा जातिभेदं करोति यः ॥
तं भक्षयन्ति योगिन्यस्तं शपन्ति कुलेश्वरि ! ।
स्त्रीणामन्यतमं स्थानं पुंसामन्यतमं पृथक् ॥
अथवा मिथुनं कृत्वा क्रमात् समुपवेशयेत् ।
पंक्त्याकारेण वा सम्यक् चक्राकारेण वा प्रिये ! ॥

शिवशक्तिधिया सर्वं चक्रमध्ये समर्च्चयेत् ।
अविभक्तौ यथा आवां लक्ष्मीनारायणौ यथा ॥
यथा वाणीविधातारौ तथा वीरः सशक्तिकः ।
मधुकुम्भसहस्रैस्तु मांसभारशतैरपि ॥
न तुष्यामि वरारोहे ! भगलिङ्गामृतं विना ।
न चक्राङ्कं न पद्माङ्कं न वज्राङ्कमिदं जगत् ॥
लिङ्गाङ्कञ्च भगाङ्कञ्च तस्माच्छक्तिशिवात्मकम् ।
शिवशक्तिसमायोगो यस्मिन् काले प्रजायते ॥
सा सन्ध्या कुलनिष्ठानां समाधिस्था प्रतीयते ।
कामुको न स्त्रियं गच्छेदनिच्छन्तीमदीक्षिताम् ।
दीक्षितां कुलजां मत्तां विहितत्वात् स्त्रियं व्रजेत् ॥
इति तत्त्वत्रयोल्लासपानभेदादि चोदितम् ।
समासेन कुलेशानि ! किं भूयः श्रोतुमिच्छसि ॥

इति कुलार्णवे महारहस्ये त्रितयतत्त्वपानादिभेदकथनं नामाष्टम उल्लासः ।

## नवम उल्लासः ।

देव्युवाच । कुलेश ! श्रोतुमिच्छामि योगयोगीशलक्षणम् ।
कुलभक्तार्च्चनफलं वदस्व करुणानिधे ! ॥
ईश्वर उवाच । शृणु देवि ! प्रवक्ष्यामि योगयोगीशलक्षणम् ।
तस्य श्रवणमात्रेण योगः साक्षात् प्रकाशते ॥
ध्यानन्तु द्विविधं प्रोक्तं स्थूलसूक्ष्मप्रभेदतः ।
साकारं स्थूलमित्याहुर्निराकारन्तु सूक्ष्मकम् ॥
अस्थिरात्ममानसः कश्चित् स्थूलध्यानं प्रचक्षते ।
स्थूलेन निश्चितं चेतो भवेत् सूक्ष्मेऽपि सुस्थिति ॥
करपादोदराङ्गास्यरहितं परमेश्वरम् ।
सर्वतेजोमयं ध्यायेत् सच्चिदानन्दलक्षणम् ॥

नोदेति नास्तमभ्येति न वृद्धिं याति न क्षयम् ।
स्वयं विभात्यथान्यानि भावयेत् साधनं विना ॥
अनवस्थञ्च तद्रूपं सत्तामात्रमगोचरम् ।
वचसात्मनि सायुज्यं तज्ज्ञानं ब्रह्मसंज्ञकम् ॥
प्रनष्टवायुसञ्चारः पाषाण इव निश्चलः ।
परजीवैकधामज्ञो योगी योगविदुच्यते ॥
पदार्थमात्रनिर्भातं स्तिमितोदधिवत् स्थितम् ।
रूपशून्यञ्च तद्ध्यानं समाधिरभिधीयते ॥
न किञ्चिच्चिन्तनाद्देवि ! स्वयं तत्त्वं प्रकाशते ।
स्वयं प्रकाशिते तत्त्वे तत्क्षणात्तन्मयो भवेत् ॥
स्वप्नजाग्रदवस्थायां स्वप्नवद्योऽवतिष्ठते ।
निश्वासश्वासहीनश्च निश्चितं मुक्त एव सः ॥
निष्पन्दकरणग्रामः स्वात्मनात्मा च निश्चलः ।
य आस्ते मृतवत् साक्षाज्जीवन्मुक्तः स उच्यते ॥
न शृणोति नवा पश्येन्न तिष्ठति न गच्छति ।
न जानाति सुखं दुःखं न च संलिप्यते मनः ॥
न चापि किञ्चिज्जानाति न च बुध्यति काष्ठवत् ।
एवं शिवे विलीनात्मा समाधिस्थ इहोच्यते ॥
यथा जले जलं क्षिप्तं क्षीरे क्षीरं घृते घृतम् ।
अविशेषो भवेत्तद्वज्जीवात्मपरमात्मनोः ॥
यथा ध्यानस्य सामर्थ्यात् कीटको भ्रमरायते ।
तथा ध्यानस्य सामर्थ्याद्ब्रह्मभूतो भवेन्नरः ॥
क्षीरोद्धृतं घृतं यद्वत्तत्र क्षिप्तं न पूर्ववत् ।
पृथक्कृतो गुणेभ्यः स्यादात्मा तावदिहोच्यते ॥
यथान्धकारागारस्थो न किञ्चिदिह पश्यति ।
अलक्ष्यञ्च तथा योगी प्रपञ्चं नैव पश्यति ॥

यथा निमीलने काले प्रपञ्चं नैव पश्यति।
तथैवोन्मीलनेऽपि स्यादेतद्ध्यानस्य लक्षणम्॥
जनस्य देहकण्डूतिं विजानाति यथा तथा।
परं ब्रह्मस्वरूपी च वेत्ति विश्वविचेष्टितम्॥
विदिते परमे तत्त्वे वर्णातीतेऽस्तविक्रमे।
किङ्करत्वं हि गच्छन्ति मन्त्रा मन्त्राधिपैः सह॥
आत्मैकभावनिष्ठस्य या या चेष्टा तदर्चनम्।
यो यो जल्पः स्वमन्त्रःस्यात्तद्ध्यानं यन्निरीक्षणम्॥
देहाभिमाने गलिते विदिते परमात्मनि।
यत्र यत्र मनो याति तत्र तत्र समाधयः॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परात्परे॥
योगीन्द्रेण यथा प्राप्तं निर्मलं परमं पदम्।
देवासुरपदं तद्वत् प्राप्यते चापि गृह्यते॥
यः पश्येत् सर्वगं शान्तमानन्दानन्दमव्ययम्।
न तस्य किञ्चिज्ज्ञातव्याज्ज्ञातव्यात्मावशिष्यते॥
सम्प्राप्ते ज्ञानविज्ञाने सिद्धये च हृदि स्थिते।
लब्धे शान्तिप्रदे देवि! न योगो नैव धारणा॥
परब्रह्मणि विज्ञाते समस्तैर्नियमैरलम्।
तालवृन्तेन किं कार्य्यं लब्धे मलयमारुते॥
असिकाबन्धनं नास्ति नासिकाबन्धनं न हि।
नियमानियमौ नास्ति स्वयमेवात्मपश्यताम्॥
न पद्मासनतो योगो न नासाग्रनिरीक्षणात्।
पद्मासनगतो योगी नासिकाग्रं निरीक्षयेत्॥
ऐक्यं जीवात्मनोराहुर्योगं योगविशारदाः।
ध्यायतः क्षणमात्रं हि श्रद्धया परमं पदम्॥

यद्भवेत्तत्समं पुण्यं तस्यान्तं नैव गच्छति ।
क्षणं ब्रह्माहमस्मीति यः कुर्य्यादात्मचिन्तनम् ॥
तत्सर्वं पातकं हन्यात्तमः सूर्य्योदये यथा ।
शतक्रतुस्तपस्तीर्थदानदेवार्च्चनादिषु ॥
यत् फलं कोटिगुणितं तदवाप्नोति तत्त्ववित् ।
उत्तमा सहजावस्था मध्यमा ध्यानधारणा ॥
जपस्तुतिः स्यादधमा होमपूजाधमाधमा ।
उत्तमा तत्त्वचिन्ता स्याज्जपचिन्ता तु मध्यमा ॥
शास्त्रचिन्ताधमा ज्ञेया लोकचिन्ताधमाधमा ।
पूजाकोटिसमं स्तोत्रं स्तोत्रकोटिसमो जपः ॥
जपकोटिसमं ध्यानं ध्यानकोटिसमो लयः ।
न हि नादात् परो मन्त्रो न देवः स्वात्मनः परः ॥
नानुसन्धेः परा पूजा न हि तृप्तेः परं फलम् ।
शिवशक्तिपरां पूजां योगी नैव समाचरेत् ॥
मन्त्रोदकैर्विना सन्ध्यां पूजाहोमैर्विना जपः ।
उपचारैर्विना यागं योगी नित्यं समाचरेत् ॥
निःसङ्गश्च विसङ्गश्च निस्तीर्णोपाधिवासनः ।
निजस्वरूपनिर्मग्नः स योगी परतत्त्ववित् ॥
देहो देवालयो देवि ! जीवो देवः सदाशिवः ।
त्यजेदज्ञाननिर्माल्यं सोऽहम्भावेन पूजयेत् ॥
जीवः शिवः शिवो जीवः स जीवः केवलः शिवः ।
यथा पङ्ग्वन्धबधिरमूकोन्मत्तजड़ादयः ॥
निवर्त्तन्ते कुलेशानि ! तथा योगी स तत्त्ववित् ।
पाशबद्धः स्मृतो जीवः पाशमुक्तः सदाशिवः ॥
तुषेण बद्धो व्रीहिः स्यात्तुषाभावे हि तण्डुलः ।
कर्मबद्धः स्मृतो जीवः कर्ममुक्तः सदाशिवः ॥

अग्नौ तिष्ठति विप्राणां हृदि वेदो मनीषिणाम्।
प्रतिमा स्वल्पबुद्धीनां सर्वत्र विदितात्मनाम्॥
यो निन्दास्तुतिशोकेषु सुखदुःखारिबन्धुषु।
सम आस्ते स योगीन्द्रो हर्षाहर्षविवर्जितः॥
निःस्पृहो नित्यसन्तुष्टः समदर्शी जितेन्द्रियः।
स्वर्गहीनोऽप्रयासो च योगी परमतत्त्ववित्॥
पञ्चमुद्रासमुत्पन्नः परमानन्दनिर्भरः।
आस्ते सर्वत्र योगीन्द्रः पश्यत्यात्मानमात्मनि॥
अलिमांसाङ्गनासङ्गे यत्सुखं जायते प्रिये!।
तदेव पुण्यं विदुषामधमानान्तु पातकम्॥
सदा मांसरसोल्लासी सदा च परचिन्तकः।
सदा संशयहीनो यः कुलयोगी स उच्यते॥
पिबन्मद्यं वमन् खादन् स्वेच्छाचारपरायणः।
अहं त्वमनयोरैक्यं भावयेन्निवसेत् सुखम्॥
आमिषाहारसौरभ्यहीनस्य न सुखं भवेत्।
प्रायश्चित्ती स विज्ञेयः पशुरेव न संशयः॥
यावदासवगन्धः स्यात् पशुः पशुपतिः स्वयम्।
विनालिमांसगन्धेन साक्षात्पशुपतिः पशुः॥
लोके निकृष्टमुत्कृष्टं लोकोत्कृष्टं निकृष्टकम्।
कुलमार्गं समुद्दिष्टं भैरवेण महात्मना॥
अनाचारः सदाचारस्त्वकार्य्यं कार्य्यमेव च।
असत्यमपि सत्यं स्यात् कौलिकानां कुलेश्वरि!।
अपेयमपि पेयं स्यादभक्ष्यं भक्ष्यमेव च।
अगम्यमपि गम्यं स्यात् कौलिकानां कुलेश्वरि!॥
न विधिर्न निषेधः स्यान्न पुण्यं न च पातकम्।
न स्वर्गो नैव नरकः कौलिकानां कुलेश्वरि!॥

अनभिज्ञा अभिज्ञन्ति दरिद्रा धनवन्ति च ।
विनष्टा अपि वर्द्धन्ते कौलिकाः कुलनायिके ! ॥
रिपवश्चापि मित्रन्ति साक्षाद्दासन्ति भूमिपाः ।
बान्धवन्ति जनाः सर्वे कौलिकानां कुलेश्वरि ! ॥
विमुखाः सुमुखाः सर्वे गर्विताः प्रणमन्ति च ।
बाधकाबाधका यान्ति कौलिकानां कुलेश्वरि ! ॥
मृत्युर्वैद्यायते देवि ! स्वर्गः साक्षाद्गृहायते ।
पुण्यायन्तेऽङ्गनाः सर्वाः कौलिकानां कुलेश्वरि ! ॥
बहुनात्र किमुक्तेन कुलयोगीश्वराः प्रिये ! ।
सदा सङ्कल्पसिद्धाः स्युर्नात्र कार्य्या विचारणा ॥
येन केनापि वेशेन येन केनाप्यलक्षितः ।
यत्र कुत्राश्रमे गच्छन् कुलयोगी प्रवर्त्तते ॥
योगिनो विविधैर्वेशैर्नराणां हितकारिणः ।
भ्रमन्ति पृथिवीमेतामविज्ञातस्वरूपिणः ॥
सक्तनैवात्मविज्ञानं क्षपयन्ति कुलेश्वरि ! ।
उन्मत्तमूकजड़वन्निवसेल्लोकमध्यमे ॥
अलक्ष्यो हि यथा लोके व्योम्नि चन्द्रार्कयोरिव ।
नक्षत्राणां ग्रहाणान्तु तथैव कुलयोगिनाम् ॥
आकाशे पक्षिणां देवि ! जलेऽपि जलचारिणाम् ।
यथा गतिर्न दृश्येत तथा वृत्तं हि योगिनाम् ॥
असन्त इव भासन्ते वदन्त्यज्ञा इव प्रिये ! ।
पावका इव दृश्यन्ते कुलयोगिविशारदाः ॥
जना यथावमन्यन्ते योगिनामेव सङ्गतिम् ।
न किञ्चिदपि भाषन्ते ततो योगी प्रवर्त्तते ॥
लुब्धो बालकवत् क्रीड़ेत् कुलेशो जलवच्चरेत् ।
वदेदुन्मत्तवद्विद्वान् कुलयोगी महेश्वरि ! ॥

यथा हसति लोकोऽयं जुगुप्सति च कुत्सितः।
विलोक्य दूरतो याति यथा योगी प्रवर्त्तते॥
क्वचिच्छिष्टः क्वचिद्दुष्टः क्वचिद्भूतपिशाचवत्।
नानावेशधरो योगी विचरेज्जगतीतले॥
योगी लोकोपकाराय भोगान् भुङ्क्ते न काङ्क्षया।
अदन् गृह्णत् कुलान् सर्वान् क्रीड़ेच्च पृथिवीतले॥
सर्वपायी यथा सूर्य्यः सर्वभोगी यथानलः।
योगी भुक्ताखिलान् भोगान् तथा पापैर्न लिप्यते॥
सर्वस्पर्शी यथा वायुर्यथाकाशश्च सर्वगः।
सर्वे यथा नदीस्नातास्तथा योगी सदा शुचिः॥
यथा ग्रामगतं तोयं नदीयुक्तं भवेत् शुचि।
तथा म्लेच्छगृहान्नादिर्योगिहस्तगतः शुचिः॥
यथा चरन्ति देवेशि! कुलधर्मपरायणाः।
यस्मिंश्चरन्ति योगीशाः स मार्गः परमो मतः॥
यस्यामुदेति सूर्य्यः स्यात् पूर्वाशा न तु दृश्यते।
यत्र मत्तगजो याति तत्र मार्गो यथा भवेत्॥
कुलयोगी चरेद्यत्र स स मार्गः कुलेश्वरि!।
नदीवक्रमृजुं कर्त्तुं निरोद्धुं तत्प्रवाहकम्॥
स्वेच्छाविहारिणं शान्तं को वा वारयितुं क्षमः।
यदुन्मत्तबलोपेतः क्रीड़न् सर्वो न दृश्यते॥
तद्वन्न दृश्यते योगी क्रीड़न्नेन्द्रियपन्नगैः।
निवृत्तदुःखाः सन्तुष्टा निर्द्वन्द्वा गतमत्सराः॥
कुलज्ञानरताः शान्ताः सङ्गत्यास्ते च कौलिकाः।
अमदक्रोधदम्भाशाहङ्काराः सत्यवादिनः॥
कौलिकेन्द्राह्यचपला जितेन्द्रियवशानुगाः।
कीर्त्त्यमाने कुले तेषां रोमाञ्चो गद्गदस्वरः॥

आनन्दाः प्रीणते देवि ! कथिताः कौलिकोत्तमाः ।
सर्वधर्माधिको लोके कुलधर्मः शिवोदितः ॥
इति ये निश्चितधियः प्रोक्तास्ते कौलिकोत्तमाः ।
यो भवेत् कुलतत्त्वज्ञः कुलनामविशारदः ॥
कुलार्च्चनरतः स स्यात् कौलिको दाम्भिकः परः ।
कुलभक्तान् कुलज्ञानान् कुलाचारकुले रतान् ॥
प्रीतो भवति यो दृष्ट्वा कौलिकः स च मे प्रियः ।
तत्त्वत्रय-श्रीचरण-मूलमन्त्रार्थतत्त्ववित् ॥
देवतागुरुभक्तस्य कौलिकस्यानुदीच्छया ।
दुर्लभं सर्वलोकेषु कुलाचार्य्यस्य दर्शनम् ॥
विपाकेनैव प्रभूणां लभ्यते नान्यथा प्रिये ! ।
संस्मृतः कीर्त्तितो दृष्टो वन्दितो भाषितोऽपिवा ॥
पुनाति कुलधर्मिष्ठश्चाण्डालोऽपि यदृच्छया ।
सर्वज्ञो वापि मूर्खो वाप्युत्तमो वाधमोऽपि वा ॥
यत्र देवि ! कुलज्ञानी तत्राहञ्च त्वया सह ।
नाहं वसामि कैलासे न मेरौ न च मन्दिरे ॥
कुलज्ञा यत्र तिष्ठन्ति तत्र तिष्ठामि भाविनि ! ।
सुदूरमपि गन्तव्यं यत्र माहेश्वरो जनः ॥
द्रष्टव्यञ्च प्रयत्नेन तत्र त्वं नन्दिता ह्यहम् ।
अतिदूरस्थितो वापि द्रष्टव्यः कुलदेशिकः ॥
समीपे वर्त्तमानोऽपि न द्रष्टव्यः पशुः प्रिये ! ।
कुलज्ञानी भवेद् यत्र स देशः पुण्यभाजनः ॥
दर्शनादर्च्चनात्तस्य त्रिसप्तकुलमुद्धरेत् ।
कुलज्ञानिनमालोक्य स्वसन्तानं गृहे स्थितम् ॥
प्रशंसन्ति पितरस्तस्य यास्यामः परमां गतिम् ।
समाश्रयन्ति पितरः स्ववृष्टिमिव कर्षकाः ॥

योऽस्मत्कुलेषु पुत्रो वा पौत्रो वा कौलिको भवेत्।
स धन्यः खलु लोकेऽस्मिन् पुरुषः क्षीणकल्मषः॥
मत्समीपं समायान्ति कुलाचार्य्या मुदा प्रिये!।
कौलिकेन्द्रे समायाते कौलिकावसथं प्रति॥
समायान्ति मुदा देवि! योगिन्यो योगिभिः सह।
प्रविश्य कुलयोगीन्द्रं भजन्ते पितृदेवताः॥
तस्मात् सम्पूजयेद्भक्त्या कुलज्ञानरतान् परान्।
अभ्यर्च्चयित्वा त्वां देवि! त्वद्भक्तान्नार्चयन्ति ये॥
पापिष्ठास्त्वत्प्रसादस्य भाजनं न भवन्ति ते।
नैवेद्यं पुरतो न्यस्तं दर्शनात् स्वीकृतं मया॥
साधुभक्तस्य जिह्वाग्रादश्नामि कमलेक्षणे!।
त्वद्भक्तपूजनाद्देवि! पूजितोऽहं न संशयः॥
तस्मान्न मत्प्रियाकाङ्क्षी त्वद्भक्तानेव पूजयेत्।
यत् कृतं कुलशिष्याणां तद्देवानां कृतं भवेत्॥
सुराः कुलप्रियाः सर्वे तस्मात् कौलिकमर्चयेत्।
न तुष्याम्यहमन्यत्र तथा भक्त्या सुपूजितः॥
कौलिकेन्द्रेऽर्चिते सम्यक् यथा तुष्यामि पार्वति!।
यत् फलं नाप्नुयात्तीर्थतपोदानमखव्रतैः॥
दत्तमिष्टं हुतं तप्तं पूजितं जप्तमम्बिके!।
कौलिकस्य भवेद्व्यर्थं कुलज्ञं योऽवमानयेत्॥
श्मशानं तद्गृहे देवि! स पापी श्वपचाधमः।
यः प्रविश्य कुलं धर्मं कुलाचारं न वेत्ति चेत्॥
कुलनिष्ठान् परित्यज्य यच्चान्यस्मै प्रदीयते।
तद्दानं निष्फलं देवि! दातापि नरकं व्रजेत्॥
भिन्नभाण्डे जलं यद्वत् शिलायामुप्तवीजवत्।
भस्मन्येव हुतं हव्यं तद्वद्दानमकौलिके॥

यथाशक्त्या तु यत्किञ्चिद्यो दद्यात् कुलयोगिने ।
विशेषतीर्थेषु प्रीत्या तत् फलं नैव वर्ण्यते ॥
यो देवि ! सुखमाहूय कुलज्ञानशुभे दिने ।
अभ्यर्च्य देवताबुद्ध्या गन्धपुष्पाक्षतादिभिः ॥
मादिभिः पञ्चमुद्राभिः सद्भक्त्या परितोषयेत् ।
तेषु तुष्टेष्वहं तुष्टस्तुष्टाः स्युः सर्वदेवताः ॥
भगिनीं वा सुतां भार्य्यां यो दद्यात् कुलयोगिने ।
मधुमत्ताय देवेशि ! तस्य पुण्यं न गण्यते ।
अनिखातविनिक्षिप्तसप्रयत्नेन वर्द्धितम् ।
परलोकस्य पाथेयं वीरचक्रार्पितं मधु ॥
पापाचारसमायुक्तं सर्वलोकवहिष्कृतम् ।
त्रायते हि कुलद्रव्यं कुलयोगीश्वरार्पितम् ॥
यस्मिन् देशे वरो वीरः कुलपूजारतः प्रिये ! ।
सोऽपि देशो भवेत् पूज्यः किं पुनः स्वपुरस्थितः ॥
कौलिको यः सकृद्भुङ्क्ते पुण्यं कोटिगुणं भवेत् ।
किं पुनर्बहुभिर्भुक्तैस्तत्पुण्यं नैव गण्यते ॥
तस्मात्सर्वप्रयत्नेन सर्वावस्थासु सर्वदा ।
कुलधर्मरतो भूयात् कुलज्ञानिनमर्चयेत् ॥
ज्ञानिनोऽज्ञानिनो वापि यावद्देहस्य धारणा ।
तावद्वर्णाश्रमाचारः कर्त्तव्यः सर्वमुक्तये ॥
कर्मणोन्मूलितेऽज्ञाने ज्ञानेन शिवतां व्रजेत् ।
शिवैक्यस्यैव मुक्तिः स्यादतः कर्म समापयेत् ॥
कर्ममुक्तः सुखाकाङ्क्षी कर्मनिष्ठः सुखं व्रजेत् ।
सर्वकर्माणि सन्त्यक्तुं न शक्यं देहधारिणा ॥
त्यजेत् कर्मफलं यो वा स त्यागीत्यभिधीयते ।
स्वकार्य्येषु प्रवर्त्तन्ते करणानीति चिन्तयेत् ॥

अहम्भावमपास्यैव यः कुर्यात् स न लिप्यते।
क्रियमाणानि कर्माणि ज्ञानप्राप्तेरनन्तरम्॥
न च स्पृशति तत्त्वज्ञं जलं पद्मदलं यथा।
तत्त्वनिष्ठस्य कर्माणि पुण्यापुण्यानि सङ्क्षयम्॥
प्रयान्ति नैव लिप्यन्ते क्रियमाणानि चाधुना।
तत्पवसहजानन्दतत्त्वज्ञानरतः प्रिये!॥
सन्त्यक्तः कर्मसङ्कल्पः स विद्वान् कर्म सन्त्यजेत्।
वृथैव यैः परित्यक्तं कर्मकाण्डमपण्डितैः॥
पाषण्डाः पण्डितम्मन्यास्ते यान्ति नरकं प्रिये!।
ऋतुं प्राप्य यथा वृक्षः पत्रं त्यजति निःस्पृहः॥
तत्त्वं प्राप्य तथा योगी त्यजेत् कर्मपरिग्रहम्।
अश्वमेधायुतेनापि ब्रह्महत्यायुतेन च॥
पुण्यपापैर्न लिप्यन्ते येषां ब्रह्म हृदि स्थितम्।
पृथिव्यां यानि कर्माणि जिह्वोपस्थनिमित्तकम्॥
जिह्वोपस्थपरित्यागी कर्मणा किं करिष्यति।
इति ते कथितं किञ्चिद् योगयोगीशलक्षणम्।
समासेन कुलेशानि! किम्भूयः श्रोतुमिच्छसि॥

इति कुलार्णवे महारहस्ये योगसंस्थापनकथनं नाम नवम उल्लासः।

---

## दशम उल्लासः।

देव्युवाच। कुलेश! श्रोतुमिच्छामि विशेषदिवसार्चनम्।
तस्य पूजाफलं देव! वद मे परमेश्वर!॥
ईश्वर-उवाच। शृणु देवि! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि।
तस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते॥
उत्तमा नित्यपूजा स्यात् पर्वपूजा तु मध्यमा।
मासपूजाधमा ज्ञेया मासादूर्द्ध्वं वहिर्भवेत्॥

विहितैर्मादिभिर्द्रव्यैर्मासादूर्द्धं समर्चनम् ।
पशोर्भूयः प्रवेशेच्छा यदि स्याद्दीक्षयेत् पुनः ॥
मद्यं मांसञ्च मत्स्यञ्च मुद्रा मैथुनमेव च ।
मकारपञ्चमं देवि ! देवताप्रीतिकारणम् ॥
मादिपञ्चकमीशानि ! देवताप्रीतये सुधीः ।
यथाविधि निषेवेत तृष्णया चेत् स पातकी ॥
कृष्णाष्टमी चतुर्द्दशी त्वमावास्याथ पूर्णिमा ।
संक्रान्तिः पञ्च पर्वाणि तेषु पुण्यदिनेषु च ॥
गुरुजन्मदिने प्राप्ते तद्गुरोस्तद्गुरोरपि ।
मानवौघादिपूजाञ्च स्वजन्मदिवसे तथा ॥
यथाबलं यथाश्रद्धं यथाद्रव्यं यथोचितम् ।
यथाकालं यथादेशं तथा पूजां समाचरेत् ॥
आचार्य्येणाथवान्येन कारयेच्चक्रपूजनम् ।
स्वयं वा पूजयेद्देवि ! विन्दुपूजापुरःसरम् ॥
सत्यलोकमवाप्नोति पुनरावृत्तिवर्जितः ।
न कृत्वा कौलिको मोहाद्देवताशापमाप्नुयात् ॥
मासि वापि द्विमासि वा षण्मासे वत्सरेऽपि वा ।
श्रीगुरुं पूजयेद्भक्त्या व्याप्तञ्च स्त्रीसुतादिभिः ॥
तदभावे कुलज्ञञ्च तच्छिष्यं वान्ययोगिनम् ।
सन्तोषयेत् कुलद्रव्यैः कुलपूजापुरःसरम् ॥
योगिष्वापत्सु दोषेषु दुःसङ्गे दुर्निमित्तके ।
पूजयेद्योगिनीवृन्दं देवि ! तद्दोषशान्तये ॥
यत्रैकाम्नायतत्त्वज्ञाः कुलाचार्य्याः कुलेश्वरि ! ।
कौलिकास्तु चतुःपञ्चशक्तयस्त तथा प्रिये ! ॥
पृथग्वा पूजयेद्देवि ! मिथुनाकारतोऽपि वा ।
गन्धपुष्पाक्षताद्यैस्तु देवेशि ! समलङ्कृताः ॥

भक्ष्यभोज्यादिपिशितैः पदार्थैः षड्रसान्वितैः।
प्रौढ़ान्तोल्लासमुदिता हसन्ति निवसन्ति च॥
तच्छ्रीचक्रमिति प्रोक्तं द्वन्द्वं चापि तदुच्यते।
कुर्य्यान्न बद्धमारीणां पूजां मद्याजमांसकैः॥
तं तं निमन्त्रयेद्भक्त्या साधकः शुद्धमानसः।
मनोहरामेकवर्षां कन्यकां शुभलक्षणाम्॥
मन्त्री स्नात्वाथ शुद्धात्मा कृत्वा देवि! क्रमार्च्चनम्।
अभ्यङ्गस्नानशुद्धान्तां पूजास्थानं समानयेत्॥
देवतासन्निधौ बालामुपवेश्य समर्चयेत्।
गन्धपुष्पादिभिर्धूपैर्दीपैश्च कुलदीपकैः॥
भक्ष्यैर्भोज्यपानैश्च क्षीराज्यमधुमांसकैः।
कदलीनारिकेलादिफलैस्तां परितोषयेत्॥
अविपक्षः स्वयं देवि! यौवनोल्लाससंयुतः।
यथाशक्ति जपेदेको मन्त्री बुद्ध्यावधिर्मनुम्॥
बालामलङ्कृतां पश्चाच्चिन्तयेत् स्वेष्टदेवताम्।
ततस्तां देवताबुद्ध्या नमस्कृत्य विसर्जयेत्॥
द्वितीयायां द्विवर्षीयां एकवर्षाञ्च पूजयेत्।
एवं तिथौ कुमारीञ्च यजेत् पूर्वदिनार्चिताम्॥
नवम्यामेकवर्षादिनववर्षान्तकन्यकाः।
सरस्वती रमा गौरी दुर्गा चन्द्रमुखी तथा॥
हरप्रिया उमा भीमा शान्ता च नव कीर्त्तिताः।
वितारार्द्यैर्नमोऽन्तैश्च देवतापदपश्चिमैः॥
नामभिश्च चतुर्थ्यन्तैः पूजयेच्च पृथक् पृथक्।
गन्धपुष्पाम्बराकल्पैर्यथाविभवविस्तरैः॥
अभ्यर्च्य देवताबुद्ध्या पदार्थैः परितोषयेत्।
स्वकार्य्यफलसिद्ध्यर्थं वित्तशाठ्यविवर्जितः॥

नवरात्रं जपेदेव तत्तद्दत्निक्रमेण च।
नवरात्रं कृतां पूजां देवि! सिद्धै समर्पयेत्॥
ताम्बूलं दक्षिणां दत्त्वा कुमारीस्ता विसर्जयेत्।
एवं नवकुमारीणामर्चनं प्रतिवत्सरम्॥
यः करोति स पुण्यात्मा देवी प्रीतिमवाप्नुयात्।
मनोऽभिलाषं सम्प्राप्य निवसेत्तव सन्निधौ॥
अथवा यौवनारूढ़ा प्रमदा यदि पार्वति!।
मनोज्ञा पूजिता भक्त्या नवरात्रिषु मन्त्रवित्॥
हृल्लेखां गगनां रक्तां महत्तुण्डां करालिकाम्।
इच्छां ज्ञानां क्रियां दुर्गां वटुकञ्च गणेश्वरम्॥
पूर्ववदापूज्यमानैः पदार्थैः परितोषयेत्।
प्रौढ़ान्तोल्लाससंयुताः सन्तुष्टा यदि चेत् प्रिये!॥
साधकस्तुष्टिमासाद्य निवसेत्तव सन्निधौ।
एवं यः पूजयेद्देवि! प्रतिवर्षं यतव्रतः॥
षण्मासे वा त्रिमासे वा मासे चैवाथ वा प्रिये!।
तिस्रो वा पञ्चमासाद्यैः पूजयेद्देवताधिया॥
सर्वैश्वर्यसमृद्धात्मा स भवेदावयोः प्रियः।
भृगुवारे कुलेशानि! कान्तामारूढ़यौवनाम्॥
सर्वलक्षणसम्पन्नां मन्दहासां मनोरमाम्।
कुलाकुलाष्टकं वापि निमन्त्राह्वय पुष्पिणीम्॥
अभ्यङ्गस्नानशुद्धाङ्गीमासने चोपवेशयेत्।
गन्धपुष्पाम्बराकल्पैरलङ्कृत्य विधानवित्॥
आत्मानं गन्धपुष्पाद्यैरलङ्कुर्यात् कुलेश्वरि!।
आवाह्य देवतां तत्स्थां यजेन्मासक्रमेण च॥
कृत्वार्चनं धूपदीपं पुष्पाढ्यं कुलदीपकम्।
प्रदर्श्य देवताबुद्ध्या पदार्थैः षड्रसान्वितैः॥

मांसादिभक्ष्यभोज्याद्यैस्तोषयेदतिभक्तितः।
प्रौढ़ान्तोल्लाससहितां तां प्रपश्यन् जपेन्मनुम्॥
यौवनल्लाससहितः स्वयं तद्ध्यानतत्परः।
निर्विकारेण चित्तेन चाष्टोत्तरसहस्रकम्॥
जपादिकं समर्प्याथ तया सह निशां नयेत्।
त्रिपञ्चसप्तनवसु भृगुवारेषु यः प्रिये!॥
पूजयेद्विधिना देवि! तस्य पुण्यं न गण्यते।
चतुःपीठार्चनफलं सम्यं प्राप्नोत्यसंशयम्॥
यद्यदस्य मनोऽभीष्टं तत्तदाप्नोत्यशेषतः।
नवम्यामर्चयेदेवं विधानेन विधानवित्॥
स्तोत्रैश्च जप्यते सर्वैर्महदैश्वर्य्यमाप्नुयात्।
मीनेऽथ कर्कटे वापि मकरे मिथुनार्चने॥
तुलायां सिंहमेषे वा सर्वसंक्रान्तिषु प्रिये!।
गौरीशिवौ रमाविष्णू वाणीसरसिजासनौ॥
शचीन्द्रौ रोहिणीचन्द्रौ स्वाहाग्नी च प्रभारवी।
भद्रकालीवीरभद्रौ भैरवीभैरवावपि॥
मिथुनानि नवाभ्यर्च्य पूर्वोक्तेनैव वर्त्मना।
त्रितारादिनमोऽन्तेन तत्तन्नाम्ना विधानवित्॥
गन्धपुष्पादिभिः पूज्या इत्याद्यैः परितोषयेत्।
प्रौढ़ान्तोल्लासयुक्तानि कुर्वीत मिथुनानि च॥
एवं कृते न सन्देहस्तुष्टा मिथुनदेवता।
अनुगृह्णन्ति तं देवि! प्रयच्छन्ति मनोरथम्॥
प्रतिवर्षञ्च यः कुर्य्याद्भक्त्या मिथुनपूजनम्।
तत्तल्लोकेषु निवसेत् सर्वैश्वर्य्यसमन्वितः॥
अथ वैशाखमासस्य शुक्लप्रतिपदीश्वरि!।
ब्राह्मे मुहूर्त्ते उत्थाय स्नानं सन्ध्यामुपास्य च॥

मनोज्ञे रहसि स्थाने पूर्वाशाभिमुखस्थित: ।
आत्मानं गन्धपुष्पाद्यैरलङ्कृत्य विधानत: ॥
कृत्वा पुरोदितन्यासं देवताभावमाश्रित: ।
किञ्चिदभ्युदिते सूर्य्ये मण्डले स्वेष्टदेवताम् ॥
ध्यात्वा सावरणां सम्यक् पूजयेद्विधिना प्रिये ! ।
षोड़शैरुपचारैस्तु चक्रपूजापुर:सरम् ॥
कुलदीपान् प्रदर्श्याथ शिवाय गुरुरूपिणे ।
मत्स्यमांसादि विधिवत् भक्ष्यभोज्यसमन्वितम् ॥
अर्घ्यं निवेद्य तच्छेषं शक्त्या सह पिबेत् प्रिये ! ।
यौवनोल्लाससहितो निर्विकल्पेन चेतसा ॥
ध्यायंस्तन्मण्डलं देवीमष्टोत्तरसहस्रकम् ।
जप्त्वा समर्प्य तत्पूजां देवताञ्च समुद्धरेत् ॥
एवं शुक्लप्रतिपदि समारभ्य शुभे दिने ।
कुर्य्याज्जपार्च्चनं कृष्णचतुर्दश्यन्तमम्बिके ! ॥
अमावस्यादिने वापि पूजयेत् शक्तिकौलिकान् ।
त्रिपञ्चसप्तनव वा वित्तलोभविवर्जित: ॥
एवं यो मासमात्रन्तु कुर्य्यात् सूर्य्योदयार्च्चनम् ।
देवता तस्य सन्तुष्टा ददाति पदमीप्सितम् ॥
मध्याह्ने वार्च्चनं देवं सायाह्ने वार्च्चयेत् प्रिये ! ।
स तु तत्फलमाप्नोति योगिनीनां प्रियो भवेत् ॥
त्रिसन्ध्यं योऽर्च्चयेद्देवं मासमात्रं विधानत: ।
काङ्क्षितां लभते सिद्धिं देववद्विहरेद्भुवि ॥
माघशुक्लप्रतिपदि दिवाहारविवर्जित: ।
स्नात: शुक्लाम्बरधर: सायं सन्ध्यामुपास्य च ॥
पूर्व्वोक्तेनैव मार्गेण सर्व्वद्रव्यसमन्वित: ।
यौवनोल्लाससहितश्चिद्रूपां देवतां स्मरन् ॥

चन्द्रास्तमयपर्य्यन्तं जपेन्मन्त्रमनन्यधीः।
एवं प्रतिदिनं शुक्लचतुर्दश्यन्तमर्च्चयेत्॥
पौर्णमास्यां यथाशक्त्या पूजयेत् शक्तिकौलिकान्।
एवं यः कुरुते भक्त्या शुक्लपक्षार्चनं प्रिये!॥
सर्वभावविशुद्धात्मा सर्वैश्वर्य्यसमन्वितः।
सर्वलोकैकपूज्यश्च स वसेत् शिवसन्निधौ॥
शुक्लपक्षेऽर्च्चनं यद्वत् तद्वत्पक्षे सितेतरे।
यः करोति विधानेन सर्वं काममवाप्नुयात्॥
इह भुक्त्वाखिलान् भोगान् देववत् प्रियदर्शनः।
योगिनीवीरमेलनं लभते नात्र संशयः॥
अथ कार्त्तिकमासस्य शुक्लप्रतिपदीश्वरि!।
स्नात्वोपास्य विशुद्धात्मा न्यासान् कृत्वा पुरोदितान्॥
प्रसुप्ते जीवलोके तु मुदितात्मा महानिशि।
पूर्वार्च्चनोक्तविधिना सर्वद्रव्यसमन्वितः॥
आज्येनानामिकास्थूलवर्त्तिं प्रज्वाल्य पार्वति!।
पञ्चवर्णरजश्चित्रवसुपत्रसरोरुहे॥
मधुपूर्णे च कलसे कांस्यपात्रमनोहरे।
दीपं संस्थाप्य पुरत उत्तराभिमुखः स्थितः॥
दीपे सावरणां देवीं ध्यात्वा विधिवदर्च्चयेत्।
यौवनोल्लाससहितो दीपस्थां देवतां स्मरेत्॥
अष्टोत्तरसहस्रन्तु जपेन्मन्त्रमनन्यधीः।
एवं समर्च्चयेत् कृष्णचतुर्दश्यन्तमम्बिके!॥
अमावस्यादिने भक्त्या पूजयेत् कुलशक्तिकान्।
एवं कृते कुलेशानि! देवता प्रीतिमाप्नुयात्॥
सर्वपापविशुद्धात्मा सर्वैश्वर्य्यसमन्वितः।
सर्वलोकैकसम्मान्यः सञ्चरेत् स यथासुखम्॥

अष्टाष्टकार्च्चनं कुर्य्याच्छक्त्या चोक्ते च वासरे ।
द्वात्रिंशद्दिवसेष्वेवं चतुःषष्टिदिनेषु च ॥
अथवाष्टदिनेष्वेवमथ द्व्यष्टदिनेषु वा ।
गुरुणा कारयेद्देवि ! क्रमज्ञेनाग्रगेण वा ॥
क्रमज्ञश्चेत् स्वयं कुर्य्याद्वित्तशाठ्यविवर्जितः ।
मूलाष्टकन्तु ब्रह्माद्याश्चासिताङ्गादिभैरवाः ॥
मङ्गलाद्यैश्च मिथुनैरष्टभिः सहिताः प्रिये ! ।
मूलाष्टको भवानीति प्रसिद्धो हि कुलागमे ॥
अहोरात्रं चतुःषष्टिमिथुनानि समर्च्चयेत् ।
पूर्वोक्तेन विधानेन यथाविभवविस्तरम् ॥
क्रमलोपं न कुर्वीत चेष्टा कार्य्या सुसिद्धये ।
गन्धपुष्पाम्बराकल्पैर्मत्स्यमांसासवादिभिः ॥
भक्ष्यभोज्यादिभिर्नानापदार्थैः षड्रसान्वितैः ।
सम्यक् सन्तोषयेद्देवि ! मिथुनान्यतिभक्तितः ॥
प्रौढ़ोल्लासेन सहितं कुर्य्यात् श्रीचक्रमम्बिके ! ।
एवं यः कुरुते देवि ! सकृदष्टाष्टकार्च्चनम् ॥
ब्रह्मविष्णुमहेशादिदेवताभिः स पूज्यते ।
किं पुनर्मानवाद्यैश्च साक्षात् शिव इवापरः ॥
यदर्च्चनाच्चतुःषष्टियोगिनीगणसंस्थितः ।
पुनरावृत्तिरहितो निवसेत्तव सन्निधौ ॥
समस्तदेवताप्रीतिकारिणी परमेश्वरी ।
तस्मात् परतरा पूजा नास्ति सत्यं न संशयः ॥
पश्येदेवंविधं चक्रं यो भक्त्याष्टाष्टकं प्रिये ! ।
यज्ञदानव्रतैस्तीर्थव्रतकोटिफलं लभेत् ॥
राजा यः कारयेद्देवि ! भक्त्याष्टाष्टकपूजनम् ।
चतुःसागरपर्य्यन्तां महीं शास्ति न संशयः ॥

श्रीकण्ठादीनि पञ्चाशन्मिथुनानि समर्च्चयेत्।
पूर्व्वोक्तेन विधानेन विश्वेश्वरि! विधानवित्॥
स्वकार्य्यफलसिद्ध्यर्थं वित्तशाठ्यविवर्जितः।
प्रौढ़ान्तोल्लाससहितो मिथुनान्यत्र कारयेत्॥
सन्तुष्टानि प्रयच्छन्ति साधकायेप्सितं वरम्।
अव्याहताज्ञः सर्व्वत्र पूज्यते देववत् प्रिये!॥
तव लोके वसेद्देवि! ब्रह्मादीश्वरसंस्तुतः।
केशवादिगणेशादिकामादिमिथुनानि च॥
श्रीकण्ठादिवदभ्यर्च्य तत्फलं लभते ध्रुवम्।
अनुग्रहन्तु यः कुर्य्यात् डाकिन्यादिसमर्च्चने॥
मासे मासेऽथवा वर्षे स्वजन्मदिवसेऽपि च।
पूर्व्वोक्तेन विधानेन यथाविभवविस्तरम्॥
प्रौढ़ान्तोल्लासपर्य्यन्तं तोषयेत्तां विधानतः।
कुर्व्वन्त्यनुग्रहं देवि! सन्तुष्टास्तास्तु देवताः॥
सर्व्वापद्रोगरहितः सर्व्वैश्वर्य्यसमन्वितः।
लोकेऽस्मिन् सत्कृतः सर्व्वैः स जीवेच्छरदां शतम्॥
देहान्ते समवाप्नोति तव लोकं न संशयः।
कुर्य्यात् पूर्व्वोक्तविधिना डाकिन्याः पूजनं प्रिये!॥
निर्व्विकल्पेन चित्तेन नवशक्तिसमन्वितः।
वर्षे वर्षे चतुःषष्टिपीठार्च्चनफलं लभेत्॥
आज्ञासिद्धिर्भवेत्तस्य देवताप्रीतिमाप्नुयात्।
पूजात्रिकन्तु यः कुर्य्यादिच्छाज्ञानक्रियान्वितम्॥
आगमोक्तेन विधिना पूर्व्ववत्तद्विधानवित्।
पदार्थैः षड्रसैः सम्यग् यथाविभवविस्तरम्॥
सन्तुष्टादेवताः सर्व्वाः सर्व्वज्ञानफलप्रदाः।
देवेशि! साधकाभीष्टं प्रयच्छन्ति न संशयः॥

इत्यादि देवतापूजां विशेषदिवसेषु च।
भजेयुः शास्त्रविधिना स भवेदावयोः प्रियः॥
श्रीचक्रं कौलिको मोहाद्विशेषदिवसेषु च।
न करोति समर्थः सन् स भवेद् योगिनीपशुः॥
कुलपूजान्तु नियतं यः करोति स कौलिकः।
कुलेशि ! समवाप्नोति योगिनीवीरमेलनम्॥
नीचोऽपि वा सकृद्भक्त्या कारयेद्यः कुलार्चनम्।
स सद्गतिमवाप्नोति किमुतान्ये द्विजातयः॥
तस्मात् सर्वप्रयत्नेन सर्वावस्थासु सर्वदा।
कुलपूजारतो भूयादभीष्टफलसिद्धये॥
कुलपूजाधिकं दानं कुलपूजाधिकं फलम्।
कुलपूजाधिको योगः कुलपूजाधिगा गतिः॥
कुलपूजाधिकं भाग्यं कुलपूजाधिकं तपः।
कुलपूजाधिका विद्या कुलपूजाधिकार्चना॥
नास्ति नास्ति पुनर्नास्ति त्वां शपे कुलनायिके !।
बहुनात्र किमुक्तेन रहस्यं शृणु पार्वति !॥
वेदशास्त्रोक्तमार्गेण कुलपूजां करोति यः।
तत्समीपस्थितं मां त्वां विद्धि नान्यत्र भाविनि !॥
इदं सत्यं इदं सत्यं सत्यं सत्यं न संशयः।
सभूमिदिग्जलगिरिनभोवनचराः प्रिये !॥
सहस्रकोटियोगिन्यस्तावन्तो भैरवा अपि।
नियुक्ता हि मया देवि ! कुलसंरक्षणाय च॥
दिवसेषु विशेषेषु सर्वे च मुदिता नराः।
साधकानेव वीक्षन्ते स्वयं पूजनलिप्सया॥
अपूजितास्तु विघ्नन्ति प्रसीदन्ति सुपूजिताः।
गुरुभक्तान् सदाचारान् गुप्तधर्मं नमन्ति च॥

भक्तिहीनान् दुराचानान् नाशयन्ति प्रसाधकान्।
श्रीचक्रे संस्मरेत्तस्माद्योगिनीभैरवान् प्रिये!॥
न स्मरेद्यदि मूढ़ात्मा योगिनीनां भवेत् पशुः।
तस्मात् श्रीचक्रमध्ये तु संस्मरेत् कुलदेवताः॥
अनुगृह्णन्ति देवेशि! साधकत्वे न संशयः।
अनुग्रहन्तु वक्ष्यामि शृणु देवि! यथाक्रमम्॥
आत्मनोऽनुग्रहार्थं वा परार्थं श्रेष्ठमुत्तमम्।
शुचिद्रव्यसमायुक्तं चक्रपूजासमन्वितम्॥
सर्वेषां दक्षिणां दत्त्वा होमपात्रं पृथक् पृथक्।
प्रपूजयेच्च वर्णस्थाः सर्वाभरणभूषिताः॥
हर्षानन्दस्वयं युक्ताः प्रसन्नाश्च पृथक् पृथक्।
पायसाज्यौदनैर्युक्तैर्नैवेद्यैर्भक्तिसंयुतैः॥
गन्धपुष्पादिभिः सम्यगर्चयित्वा गणेश्वरम्।
हसखफ्रें हसौं डां डीं डमलवरयूं ततः॥
श्रीपादुकां हसौमिति च हसखफ्रें पुटान्ततः।
सङ्कल्प्य मनसोऽभीष्टं मधुरत्रितयैः प्रिये!॥
गन्धपुष्पादिभिः सम्यगर्चयित्वा पृथक् पृथक्।
पूजयित्वेप्सितान् कामान् प्रार्थयेत् कमलानने!॥
ईप्सितानि च सर्वाणि साधको लभते वरम्।
आत्मनश्च परस्यापि रक्षार्थं पूजयेत् प्रिये!॥
रोगाणां नाशनार्थञ्च यथात्र पुत्रसिद्धये।
वश्यार्थं मङ्गलार्थञ्च धर्माकर्मार्थसिद्धये॥
सप्ताहं पूजयेद्देवि! चतुर्दशदिनानि च।
एकविंशद्दिनान्यत्र लभते चेप्सितं फलम्॥
दक्षिणाञ्च पृथग्दद्याद्वस्त्रभूषाङ्गुरीयकम्।
कुलाष्टकसमायुक्तं चतुःषष्टिसमन्वितम्॥

अर्चितञ्च प्रयत्नेन सिद्धिर्भवत्यनेकशः ।
वित्तशाठ्यं न कुर्वीत यदीच्छेत् सिद्धिमात्मनः ॥
एवं षट्कं समाख्यातं अनुग्रहं वरानने ! ।
अर्चितव्यं प्रयत्नेन साधकैः स्वेष्टसिद्धये ॥
ध्यात्वैव पूजयेदेता डाकिन्याद्या वरानने ! ।
सम्पूज्य सप्तमीं देवीं पूजयेत् सर्वसिद्धये ॥
शक्तिदेहसमुत्पन्नं शक्तिनिर्माल्यभोजने ।
स्ववर्गेण समायुक्ता दत्तनिर्माल्यमित्यपि ॥
प्रतिगृह्ण युगं स्वाहा इति निर्माल्यसर्जनम् ।
डाकिनी सर्पवदना वित्तजा ज्वलनप्रभा ॥
कमण्डलुं कर्त्तृकाञ्च धारयन्ती वरप्रदा ।
उलूकवदना देवी राकिणी नीलसन्निभा ॥
खड्गखेटकसंयुक्ता सर्वालङ्कारभूषिता ।
लाकिनी श्रीकपालाख्या पाशाङ्कुशधरासती ॥
पाटलीपुष्पसङ्काशा सर्वाभरणभूषिता ।
काकिनी हयवक्त्रा च माणिक्यसदृशप्रभा ॥
त्रिमुखी मुण्डसंयुक्ता सिद्धिदा सर्वशोभना ।
शाकिनी त्वञ्जनप्रख्या मार्जारास्या सुशोभना ॥
कुलिशञ्च तथा दण्डं धारयन्ती शुचिस्मिता ।
हाकिनी ऋक्षवदना नीलनीरदसन्निभा ॥
कपालशूलहस्ता च खेटकैरुपशोभिता ।
एकद्वित्रिचतुःपञ्चषण्मुखी सरभाभया ॥
इति ते कथितं किञ्चिद्विशेषदिवसार्चनम् ।
समासेन कुलेशानि ! किम्भूयः श्रोतुमिच्छसि ॥

इति कुलार्णवे महारहस्ये विशेषदिवसार्चनं नाम दशम उल्लासः ।

---

# एकादश उल्लासः ।

देव्युवाच । कुलेश ! श्रोतुमिच्छामि सर्वलोकैकपूजित !।
कुलाचारक्रमं देव ! वद मे करुणानिधे !॥
ईश्वर उवाच । शृणु देवि ! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते ॥
यदि चेद्दीक्षितो ज्येष्ठः कुलपूजादिवर्जितः ।
तत्कनिष्ठः क्रमज्ञश्चेत् कुलपूजां समाचरेत् ॥
तत्समीपं ततो गत्वा नमस्कृत्य गुरोर्यथा ।
तस्मै निवेद्य तत् सर्वं शेषं भुञ्जीत पार्वति ! ॥
पूजामध्ये गुरौ ज्येष्ठे कनिष्ठे वा समागते ।
नत्वा ब्रूयात् स्थितं शिष्टं आचरेत्तदनुज्ञया ॥
ज्येष्ठस्य च कनिष्ठस्य शिष्यावेकत्र संस्थितौ ।
तत्र पूर्ववदाचारः कथितः कुलनायिके ! ॥
अज्ञाते कौलिके प्राप्ते पारम्पर्य्यं समाचरेत् ।
स्मृत्वामुष्य गुरुं देवि ! स्वैकमार्गेण तर्पयेत् ॥
नित्यार्च्चनं दिने कुर्य्याद्रात्रौ नैमित्तिकार्च्चनम् ।
उभयोः काम्यकर्माणि चेति शास्त्रविनिर्णयः ॥
अस्नात्वा चाङ्गनस्थो वा भुक्त्वा वा प्रणतावपि ।
गन्धपुष्पाम्बराकल्पवस्त्राद्यैरनलङ्कृतः ॥
अविन्यस्तशरीरो वा कुलपूजां न चाचरेत् ।
विना मांसेन या पूजा विना मद्येन तर्पणम् ॥
विना शक्त्या तु यत्पानं निष्फलं कथितं प्रिये !
श्रीचक्रमिको न कुर्य्यादेकपात्रे न चार्च्चयेत् ॥
नार्चयेदेकहस्तेन न पिबेदेकपाणिना ।
मत्स्यमांसासवैर्देवि ! नार्चयेत् पशुसन्निधौ ।
प्रणम्य प्रविशेच्चक्रं विनिर्गच्छेत् प्रणम्य च ॥

श्रीचक्रदर्शनं देवि ! नेत्रयोः पापनाशनम् ।
तन्नास्ति चेद्व्रणद्वन्द्वं कौलिकस्याङ्घ्रियुग्मकम् ॥
अनाचारान् सदाचारान् चक्रस्थान् शक्तिकौलिकान् ।
शिवगौरीधिया देवि ! भावयेन्नावमानयेत् ॥
कुलाचार्य्यगृहं गत्वा भक्त्या पापविमुक्तये ।
याचयेदमृतान्नञ्च तदभावे जलं पिबेत् ॥
कुलाचार्य्येण तच्छक्त्या दत्तं पात्रञ्च भक्तितः ।
नमस्कृत्य तु गृह्णीयादन्यथा नरकं व्रजेत् ॥
अस्नात्वा वापि भुक्त्वा वाप्यभुक्त्वा वा कुलेश्वरि ! ।
यः सेवेत कुलद्रव्यं सदा विक्लवमाप्नुयात् ॥
उष्णीषी कञ्चुकी नग्नो मुक्तकेशो दिगम्बरः ।
व्यग्रो रुष्टो विवादी च न सेवेत कुलामृतम् ॥
योगामृतेन निष्ठीवेन्मद्यभाण्डपरिभ्रमात् ।
ऊर्द्ध्वनालेन पानाच्च देवताशापमाप्नुयात् ॥
एकासने निविष्टस्तु भुञ्जानस्त्वेकभाजने ।
एकपात्रे पिबेत्तोयं ते यान्ति नरकं प्रिये ! ॥
यः सेवेत कुलद्रव्यमेकग्रामस्थिते गुरौ ।
तत्कुलीने च तत्पुत्रे स्वज्येष्ठे कुलदेशिके ॥
विनानुज्ञां महेशानि ! सोऽक्षयं नरकं व्रजेत् ।
उच्छिष्टं न स्पृशेच्चक्रं कुलद्रव्याणि पार्वति ! ॥
न हि प्रक्षाल्य च करौ कुलद्रव्याणि दापयेत् ।
मधुभाण्डं समुद्धृत्य न पात्रं पूरयेत् प्रिये ! ॥
भोगपात्रसुधाकुण्डे निक्षिपेन्न कदाचन ।
चक्रमध्ये शुचिधिया करप्रक्षालनादिकान् ॥
यः करोति हि मूढात्मा स भवेदापदास्पदम् ।
निष्ठीवनं मलं मूत्रमधोवायुविसर्जनम् ॥

श्रीचक्रमध्ये यः कुर्य्यात् स भवेद्योगिनीपशुः।
चक्रमध्ये घटे भग्ने पात्रे च स्खलिते प्रिये!॥
दोषनाशे च तच्छान्त्यै श्रीचक्रं कारयेत् प्रिये!।
केचिज्जपन्ति ध्यायन्ति स्तुवन्ति प्रणमन्ति च॥
बोधयन्ति च पृच्छन्ति वन्दन्ति ज्ञानिनं प्रिये!।
अन्ये भ्रमन्ति गर्जन्ति हसन्ति विवदन्ति च॥
वदन्ति प्रियमिच्छन्ति निन्दन्त्यज्ञानिनं प्रिये।।
परिहासं प्रलापञ्च वितण्डां बहुभाषितम्॥
औदासीन्यं भयं क्रोधं चक्रमध्ये विवर्जयेत्।
पात्रहस्तो महादेवि! न भ्रमेच्चक्रमध्यमे॥
पूर्णपात्रं करे धृत्वा न तिष्ठेत चिरं प्रिये!।
नालापेत् पात्रहस्तः सन् न भिन्द्यात् पात्रमम्बिके!॥
पादाभ्यां न स्पृशेत्पात्रं न विन्दुं पातयेदधः।
नैकहस्तेन दातव्यं न मुद्रावर्जितं प्रिये!॥
पात्रं न चालयेत् स्थानान्न कुर्य्यात् पात्रसङ्करम्।
सशब्दं न पिबेद्द्रव्यं तथैव च न पूरयेत्॥
नान्योन्यं ताड़येत्पात्रं तथा न पातयेदधः।
साधारं नोद्धरेत्पात्रं आधारेण न निक्षिपेत्॥
रिक्तपात्रं न कुर्वीत न पात्रं भ्रामयेत् प्रिये!।
प्रक्षाल्य गोपयेत्पात्रमित्याज्ञा परमेश्वरि!॥
यदा सन्दीपितोल्लासः कौलिकः पशुमीक्षते।
पठित्वा पशुशास्त्राणि सङ्गच्छेद् वा पशुस्त्रियम्॥
कुर्य्यात्पशुप्रसङ्गं वा पशुकार्य्याणि वा चरेत्।
धर्मार्थायुर्यशः पुत्त्रं ज्ञानसौख्यादि नश्यति॥
श्रीचक्रस्थं कुलद्रव्यं यः पशुभ्यः प्रयच्छति।
स्वेच्छालोभाद्भयाद्वापि स भवेद्योगिनीपशुः॥

रिपुणापि न कर्त्तव्यो वाग्वादश्चक्रमध्यतः ।
पितृमातृसमं पश्येत्तेनोक्तं परुषं सहेत् ॥
यथा दृष्ट्वा प्रहृष्येत स्वजनं मित्रसुप्रियम् ।
तथाच कौलिकान् दृष्ट्वा स भवेद्योगिनीप्रियः ॥
ब्रह्मादिस्तम्बपर्य्यन्तं यस्य मे गुरुसन्ततिः ।
तस्य मे सर्वशिष्यस्य को न पूज्यो महीतले ॥
इति निश्चितबुद्धिर्यः स भवेदावयोः प्रियः ।
अहं गुरुरहं ज्येष्ठस्त्वहं वेद्मीति गर्वितः ॥
अहमेव गतिर्येषां कौलिका न भवन्ति ते ।
श्रीगुरुं कुलशास्त्राणि पूज्यस्थानानि यानि च ॥
भक्त्या श्रीपूर्वकं देवि ! प्रणम्य परिकीर्त्तयेत् ।
गुरुनाम्ना न भाषेत जपकालादृते प्रिये ! ॥
श्रीनाथदेवस्वामीति विवादे साधने वदेत् ।
श्रीगुरोः पादुकां देवि ! मूलमन्त्रं स्वपादुकाम् ॥
शिष्यादन्यत्र देवेशि ! न वदेद्यस्य कस्यचित् ।
पारम्पर्य्यं समास्थाय मन्त्राचारादिकं प्रिये ! ॥
सर्वं गुरुमुखाल्लब्धं सफलं स्यान्नचान्यथा ।
श्रीशास्त्राश्रयभूतञ्च पुस्तकं परमेश्वरि ! ॥
नित्यं समर्चयेद्भक्त्या पशुहस्ते न निक्षिपेत् ।
स्वदारवन्निषेवेत कुलशास्त्राणि पार्वति ! ॥
पशुशास्त्राणि सर्वाणि वर्जयेत् परदारवत् ।
श्वचर्मस्थं यथा क्षीरमपेयं स्याद्‌द्विजोत्तमैः ॥
तथा पशुमुखात्सर्वं न श्रोतव्यं हि कौलिकैः ।
यः शृणोति कुलाचारं यथाशास्त्रञ्च यो वदेत् ॥
तावुभौ गच्छतः साक्षाद्योगिनीवीरमेलनम् ।
अश्रद्दधाना ये चात्र कुलधर्मं कुलेश्वरि ! ॥

नरकान्नो निवर्त्तन्ते यावदाभूतसंप्लवम्।
उद्धृता च महाप्रीता मूलेन च समाहृता ॥
सङ्कल्पामरता वापि पञ्चधा गुरुयोषितः।
अलङ्घ्याः पूजनीयाः स्युर्गुरुवद् गुरुयोषितः ॥
गुरुशक्तिं महाशक्तिं कुमारीं व्रतधारिणीम्।
व्यङ्गाङ्गीं विकृताङ्गीञ्च कुब्जामपि न कामयेत् ॥
सुताञ्च भगिनीं पौत्रीं स्नुषां वापि प्रियामपि।
न कामयेद्गुरोरग्रे कुर्य्यान्नान्योन्यगूहनम् ॥
कृष्णांशुकां कृष्णवर्णां कुमारीञ्च कृशोदरीम्।
मनोहरां यौवनस्थां पूजयेद्देवताधिया ॥
एकदापि न लभ्येत बलेन कुलयोगिनी।
चक्रमध्ये स्वयं क्षुब्धां कामयेन्न कदाचन ॥
आममांसं सुराकुम्भं मत्तेभं सिद्धलिङ्गिनम्।
सहकारमशोकञ्च क्रीड़ालोलां कुमारिकाम् ॥
एकवृक्षं श्मशानञ्च समूहं योषितामपि।
नारीञ्च रक्तवसनां दृष्ट्वा वन्देत भक्तितः ॥
गुरुशक्तिसुतज्येष्ठकनिष्ठान् कुलदेशिकान्।
फलदर्शनशास्त्राणि कुलद्रव्याणि कौलिकान् ॥
प्रेरकान् सूचकांश्चापि वाचकान् दर्शकांस्तथा।
शिक्षकान् बोधकान् योगी योगिनीसिद्धपूरुषान् ॥
कन्या कुमारिका नग्ना उन्मत्ता वापि योषितः।
न निन्देन्न च संक्षुभ्येन्न हसेन्नावमानयेत् ॥
नाप्रियं नानृतं ब्रूयान्नमन्ति कुलयोगिनः।
कुलपाचेति कृष्णेति न वदेत् कुलयोषितम् ॥
परीक्षयेन्न भक्तानां वीराणाञ्च कृताकृतम्।
न पश्येद्वनितां नग्नामुन्मत्तां प्रकटस्तनीम् ॥

न दिवा सेवयेन्नारीं तद्योनिं नैव वीक्षयेत् ।
या काचिदङ्गना लोके सा मातृकुलसम्भवा ॥
कुप्यन्ति कुलयोगिन्यो वनितानां व्यतिक्रमात् ।
शतापराधैर्वनितां पुष्पेणापि न ताड़येत् ॥
दोषान्न गणयेत् स्त्रीणां गुणानेव प्रकाशयेत् ।
तिष्ठन्ति कुलयोगिन्यः कुलवृक्षेषु सर्वदा ॥
तत्पत्रेषु न भोक्तव्यमर्कपत्रे विशेषतः ।
न स्वपेत् कुलवृक्षाधो न चोपद्रवमाचरेत् ॥
दृष्ट्वा श्रुत्वा नमस्कुर्य्याच्छेदयेन्न कदाचन ।
श्लेष्मातकं करञ्जाख्यं निम्बाश्वत्थकदम्बकाः ॥
विल्व वटोडुम्बराश्च कुलवृक्षा इमे स्मृताः ।
प्रायश्चित्तं भृगोः पातं सन्यासं व्रतधारणम् ॥
तीर्थयात्राभिगमनं कौलः पञ्च विवर्जयेत् ।
वीरहत्या वृथापानं वीरपत्नीनिषेवणम् ॥
वीरद्रव्यापहरणं तत्संयोगाच्च पञ्चमम् ।
महापातकमित्युक्तं कौलिकानां कुलान्वये ॥
शैवे तत्त्वपरिज्ञानं गारुड़े विषभक्षणम् ।
सौरे च ज्योतिषं सारं कौलिकग्रहनिग्रही ॥
देवताकुलशास्त्राणि सिद्धचारविड़म्बकाः ।
विद्याचौरो गुरुद्रोही ब्रह्मराक्षसतां व्रजेत् ॥
गुरुं हुङ्कृत्य तुङ्कृत्य वीरं निर्जित्य वादतः ।
विकल्प्य कुलशास्त्राणि भवन्ति ब्रह्मराक्षसाः ॥
एकाक्षरप्रदातारं यो गुरुञ्चावमानयेत् ।
प्राणी योनिशतं गत्वा चण्डालत्वमवाप्नुयात् ॥
मातरं पितरं भार्य्यां भ्रातरं बान्धवं सुतम् ।
कुलनिन्दाकरं देवि ! हन्यात्तमविचारतः ॥

कुलार्थं देवतार्थं वा कौलिकार्थं कुलेश्वरि !।
कुलागमार्थमथवा कुलधर्मार्थमेव वा ॥
देवि ! निन्दाकरं हत्वा बाधितः स्वयमेव वा।
यस्त्यजेद्दुस्त्यजप्राणान् स परे लीयते शिवे ॥
एकस्मिन्निधने यत्र प्रापितो दुष्टचारिणि।
बहूनां भवति क्षेमपुण्यं तस्य बधे भवेत् ॥
देवि ! श्रीचक्रवृत्तान्तं शुभं वा यदि वाशुभम्।
कदाचिन्नैव कर्त्तव्यमित्याज्ञा परमेश्वरि ! ॥
कुलधर्मप्रसङ्गञ्च पशूनां पुरतः प्रिये !।
कदाचिन्नैव कुर्वीत शूद्राग्रे वेदपाठवत् ॥
पीठक्षेत्रागमाम्नायतद्दिव्याचारकौलिकान्।
कुलद्रव्यादिकं देवि ! न वदेत् पशुसन्निधौ ॥
यथा रक्षति चौरेभ्यो धनधान्यमजादिकम्।
कुलधर्मं तथा देवि ! पशुभ्यः परिवारयेत् ॥
अन्तः कौला वहिः शैवाः सभायां वैष्णवा मताः।
कुलं सङ्गोपयेद्देवि ! नारिकेलफलाम्बुवत् ॥
कुलधर्ममिदं देवि ! सर्वावस्थासु सर्वदा।
गोपयेच्च प्रयत्नेन जननीजारवत् प्रिये ! ॥
वेदशास्त्रपुराणानि सामान्यगणिका इव।
इयन्तु शाम्भवी विद्या गुप्ता कुलबधूरिव ॥
सुगुप्तकौलिकाचारानतुगृह्णन्ति देवताः।
वाञ्छासिद्धिमवाप्नोति नाशयन्ति प्रकाशकान् ॥
कुलेशि ! कुलशास्त्रज्ञाः कुलपूजापरायणाः।
ये त्वां रहसि सेवन्ते ते तिष्ठन्ति तवान्तिके ॥
गुरुं प्रकाशयेद्धीमान् मन्त्रं नैव प्रकाशयेत्।
अप्रकाशप्रकाशाभ्यां क्षीयन्ते सम्पदायुषः ॥

सर्वाचारपरिभ्रष्टो गुप्ताचारं परिव्रजेत् ।
कुलाचारपरिभ्रष्टो रौरवं नरकं व्रजेत् ॥
शास्त्रेषु निष्कृतिर्दृष्टा महापातकिनामपि ।
कुलनष्टस्य देवेशि ! न दृष्टा निष्कृतिः क्वचित् ॥
कुलधर्मं समाश्रित्य आचारं यो न पालयेत् ।
यथेच्छाचारिणस्ते स्युः महापातकिनः प्रिये ! ॥
आपदो दुरितं रोगा दारिद्र्यं कलहं भयम् ।
योगिनीनां प्रकोपश्च स्खलितानि पदे पदे ॥
भ्रंशमानः प्रनष्टश्च तेजोहीनोऽतिदुःखितः ।
निन्दितः सर्वविद्विष्टो विह्वलः सङ्गवर्जितः ॥
देशाद्देशान्तरं याति राज्यहानिश्च जायते ।
अत्रापि कुलमार्गस्थाः शाकिन्यः कुलपालिकाः ॥
भक्षयन्ति पुरा तासां वरो दत्तो मयैव तु ।
तस्मादाचारतो देवि ! योगिनीनां प्रियो भवेत् ॥
नाशयन्ति चतुर्वेदाननाचारात् कुलेश्वरि ! ।
पादुकामात्रसारज्ञः सदाचारी यतव्रतः ॥
सदाचारेण देवेशि ! योगिनीवीरमिलनम् ।
सम्प्राप्नुवन्ति तिर्यक्त्वं कौलिकास्तद्विपर्ययात् ॥
आज्ञासिद्धमिदं कौलमनाचाराद्विनश्यति ।
आचारपालनात् सत्यमतः सिद्धिर्भविष्यति ॥
नाभिषेको न मन्त्रो वा न शास्त्रपठनादपि ।
कारणं कुलधर्मस्य सदाचारात् कुलेश्वरि ! ॥
परा श्रीपादुकातत्त्वत्रयाचारादिवासनाम् ।
यो वेत्ति समयी स स्यात् कौलिकश्चापि शाम्भवि ! ॥
तावन्न कौलिको देवि ! यावन्न समयीकृतः ।
देहपातेऽपि मोक्षः स्यात् समयाचारपालनात् ॥

संस्कारेण विहीनत्वाद् गुरुवाक्यस्य लङ्घनात् ।
आचारलङ्घनाद्देवि ! कौलिकः पतितो भवेत् ॥
नित्यनैमित्तिकद्रव्यमन्त्रतन्त्रादिलोपनम् ।
अनर्हपशुदुःसङ्गमन्त्रसाङ्कर्य्यसम्भवम् ॥
गुप्तप्रकटसम्भूतं ज्ञानाज्ञानकृतं प्रिये ! ।
एवमादिषु दोषेषु पापस्य गुरुलाघवम् ॥
देशं कालं वयो वित्तं सम्यग्ज्ञात्वा यथाविधि ।
प्रायश्चित्तं गुरुः कुर्य्यात् सर्वपापविशुद्धये ॥
शिष्येभ्यो वेदवत् प्रोक्तः प्रायश्चित्तं समाचरेत् ।
अथवा सर्वपापानां गुरुनामजपः स्मृतः ।
साक्षादस्य हि कलुषं परिशुद्धं यथाग्निना ॥
अनाचारमरण्यन्तु प्रायश्चित्ताग्निना दहेत् ।
बहुनात्र किमुक्तेन रहस्यं शृणु पार्वति ! ।
वर्णाश्रमाणां सर्वेषामाचारः सद्गतिप्रदः ॥
गुरुस्त्रिवारमाचारं कथयेच्च कुलेश्वरि ! ।
न गृह्णाति हि शिष्यश्चेत्तदा पापं गुरोर्नहि ॥
मन्त्रिदोषश्च राजानं जायादोषः पतिं यथा ।
तथा प्राप्नोत्यसन्देहं शिष्यपापं गुरुः प्रिये ! ॥
इति ते कथितं किञ्चित् समासेन कुलेश्वरि ! ।
कुलाचारविधिं देवि ! किम्भूयः श्रोतुमिच्छसि ॥

इति कुलार्णवे महारहस्ये कुलाचारकथनं नाम एकादशोल्लासः ।

---

## द्वादश उल्लासः ।

देव्युवाच । कुलेश ! श्रोतुमिच्छामि पादुकां भक्तिलक्षणाम् ।
आचारमपि देवेश ! वद मे करुणानिधे ! ॥
ईश्वर उवाच । शृणु देवि ! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।

तस्य श्रवणमात्रेण भक्तिराशु प्रजायते ॥
वाग्भवाम्बूलवलये सूत्राद्याः कवलीकृताः ।
एवं कुलार्णवे ज्ञानं पादुकायां प्रतिष्ठितम् ॥
कोटिकोटिमहादानात् कोटिकोटिमहाव्रतात् ।
कोटिकोटिमहाज्ञानात् परा श्रीपादुकास्मृतिः ॥
कोटिमन्त्रजपाद्देवि ! पुण्यतीर्थावगाहनात् ।
कोटिदेवार्च्चनाद्देवि ! परा श्रीपादुकास्मृतिः ॥
महारोगे महोत्पाते महादोषे महाभये ।
महापदि महापापे स्मृता रक्षति पादुका ॥
दुराचारे दुरालोके दुःसङ्गे दूष्यसंग्रहे ।
दुराहारे च दुर्बुद्धौ स्मृता रक्षति पादुका ॥
तेनाधीतं स्मृतं ज्ञातं दृष्टं दत्तञ्च पूजितम् ।
जिह्वाग्रे वर्त्तते यस्य परा श्रीपादुकास्मृतिः ॥
सकृत् श्रीपादुकां देवि ! यो वा वदति भक्तितः ।
स सर्वपापरहितः प्राप्नोति परमां गतिम् ॥
शुचिर्वाप्यशुचिर्वापि भक्त्या स्मरति पादुकाम् ।
अनायासेन धर्मार्थकाममोक्षान् लभेत सः ॥
श्रीनाथचरणाम्भोजं यस्यां दिशि विराजते ।
तस्यै दिशे नमस्कुर्य्याद् भक्त्या प्रतिदिनं प्रिये ! ॥
न पादुकापरो मन्त्रो न देवः श्रीगुरोः परः ।
न हि शास्त्रात् परं ज्ञानं न पुण्यं कुलपूजनात् ॥
ध्यानमूलं गुरोर्मूर्त्तिः पूजामूलं गुरोः पदम् ।
मन्त्रमूलं गुरोर्वाक्यं मोक्षमूलं गुरोः कृपा ॥
गुरुमूलाः क्रियाः सर्वा लोकेऽस्मिन् कुलनायिके ! ।
तस्मात् सेव्यो गुरुर्नित्यं सिद्ध्यर्थं भक्तिसंयुतैः ॥
तावदार्त्तिर्भयं शोको लोभमोहभ्रमादयः ।

यावन्नायाति शरणं श्रीगुरुं भक्तवत्सलम्॥
तावद्भ्रमन्ति संसारे सर्वदुःखमलीमसाः।
न भवेत् श्रीगुरोर्भक्तिर्यावद्देवेशि! देहिनः॥
सर्वसिद्धिफलोपेतो मन्त्रः शुध्यति शोभनः।
गुरोः प्रसादमूलोऽयं परतत्त्वमहात्मनः॥
यदा ददाति सन्तुष्टः प्रसन्नो वरदो मनुम्।
तदा भक्त्या धनैः प्राणैर्गुरुं यत्नेन तोषयेत्॥
यदा दद्यात् स्वशिष्येभ्यः स्वात्मानं देशिकोत्तमः।
तदा मुक्तो भवेच्छिष्यस्ततो नास्ति पुनर्भवः॥
तावदाराधयेत् शिष्यः प्रसन्नोऽसौ यदा भवेत्।
गुरौ प्रसन्ने शिष्यस्य सद्यः पापक्षयो भवेत्॥
मनसापि न काङ्क्षेत यान् कामाननुजीविनः।
सम्पादयन्ति तान् सर्वान् स्वामिनो भक्तवत्सलाः॥
ब्रह्मविष्णुमहेशादिदेवता मुनियोगिनः।
कुर्वन्त्यनुग्रहं तुष्ट्या गुरौ तुष्टे न संशयः॥
भक्त्या सन्तुष्टगुरुणा योपदिष्टः कृपात्मना।
कर्ममोचो भवेत् शिष्यो भुक्तिमुक्त्योः स भाजनम्॥
शिष्येणापि ततो ग्राह्यं सदा सन्तोषितो गुरुः।
प्रियं कुर्य्याच्च देवेशि! मनोवाक्कायकर्मभिः॥
यदि वा परितुष्येत गुरुणा यत्र कुत्रचित्।
मुक्तोऽसीति समुद्दिष्टः सोऽपि मुक्तिं व्रजेत् प्रिये!॥
अथवा निष्प्रपञ्चेन धार्मिकेण चिदीश्वरि!।
करोति गुरुरूपेण पशुपाशविमोचनम्॥
न मे प्रियश्चतुर्वेदी मद्भक्तः श्वपचः प्रियः।
तस्मै देयं ततो ग्राह्यं स तु पूज्यो ह्यहं यथा॥
विप्रोऽपि गुणयुक्तो वाप्यभक्तो न प्रशस्यते।

म्लेच्छोऽपि गुणहीनोऽपि भक्तिमान् शिष्य उच्यते ॥
गुरुभक्तिविहीनस्य तपो विद्या कुलं व्रतम् ।
सर्वं नश्यति तत्रैव भूषणं लोकरञ्जनम् ॥
गुरुभक्त्याग्निना सम्यग्दग्धा सर्वगतिर्नरः ।
श्वपचोऽपि परैः पूज्यो न विद्वानपि नास्तिकः ॥
धर्मार्थकामैः किं तस्य मोक्ष एव करे स्थितः ।
सर्वोपायैर्गुरौ देवि ! यस्य भक्तिः सदा स्थिरा ॥
स शिवो गुरुरूपेण भुक्तिमुक्तिप्रदो मम ।
इति भक्त्या स्मरेद्यस्तु तस्य सिद्धिरदूरतः ॥
यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैव कथिता ह्यर्थाः प्रकाशन्ते कुलेश्वरि ! ॥
नारायणे महादेवे मातापित्रोश्च राजनि ।
भक्तिर्यथा भवेद्देवि ! तथा कार्य्या निजे गुरौ ॥
लक्ष्मीनारायणौ वाणीधातारौ गिरिजाशिवौ ।
श्रीगुरुं गुरुपत्नीञ्च पितराविति चिन्तयेत् ॥
गुरुभक्त्या यथा देवि ! प्राप्यन्ते सर्वसिद्धयः ।
सर्वदानतपस्तीर्थव्रताद्यैर्न तथा प्रिये ! ॥
श्रीगुरौ निश्चला भक्तिर्वर्द्धते हि यथा यथा ।
तथा तथास्य विज्ञानं वर्द्धते कुलनायिके ! ॥
किं तीर्थाद्यैर्महायासैः किं व्रतैः कायशोषणैः ।
निर्व्याजसेवा देवेशि ! भक्तिर्यस्य निजे गुरौ ॥
कायक्लेशेन महता तपसा वापि यत् फलम् ।
तत् फलं लभते देवि ! सुखेन गुरुसेवया ॥
भोगमोक्षार्थिनां ब्रह्मविष्णीशपदकाङ्क्षिणाम् ।
भक्तिरेव गुरौ देवि ! नान्यः पन्था इति श्रुतिः ॥
अशुभानि च कर्माणि सुमहापातकानि च ।

भक्तिः क्षणेन दहति तूलराशिमिवानलः॥
विश्वासाय नमस्तस्मै सर्वसिद्धिप्रदायिने।
येन स्वहारुद्रशदः फलन्त्यविफलं फलम्॥
न योगो न तपो नार्च्चाक्रमः कोऽपि प्रलीयते।
अमायाकुलमार्गेण भक्तिरेव विशिष्यते॥
साक्षादगुरुमयी देवि! सर्वेऽस्मिन् भुवनान्तरे।
किन्तु भक्तिमतां चेत्रे मन्त्रः केषां न सिध्यति॥
गुरौ मनुष्यबुद्धिश्च मन्त्रे चाक्षरबुद्धिकम्।
प्रतिमासु शिलाबुद्धिं कुर्वाणो नरकं व्रजेत्॥
गुरुं न मर्त्यं बुध्येत यदि बुध्येत तस्य तु।
न कदाचिद्भवेत् सिद्धिर्मन्त्रैर्वा देवतार्च्चनैः॥
श्रीगुरुं प्राकृतैः सार्द्धं ये स्मरन्ति वदन्ति वा।
तेषां हि सुकृतं सर्वं पातकं भवति प्रिये!॥
जन्महेतू हि पितरौ पूजनीयौ प्रयत्नतः।
गुरुर्विशेषतः पूज्यो धर्माधर्मप्रदर्शकः॥
गुरुः पिता गुरुर्माता गुरुर्देवो गुरुर्गतिः।
शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन॥
गुरोर्हितं हि कर्त्तव्यं मनोवाक्कायकर्मभिः।
अहिताचरणाद्देवि! विष्ठायां जायते कृमिः॥
शरीरवित्तप्राणैश्च श्रीगुरुं वञ्चयन्ति ये।
कृमिकीटपतङ्गत्वं प्राप्नुवन्ति न संशयः॥
गुरुत्यागाद्भवेन्मृत्युर्मन्त्रत्यागाद्दरिद्रता।
गुरुमन्त्रपरित्यागाद्रौरवं नरकं व्रजेत्॥
गुर्वर्थं धारयेद्देहं गुर्वर्थं धनमर्जयेत्।
निजप्राणान् परित्यज्य गुरुकार्य्यं समाचरेत्॥
गुरूक्तं परुषं वाक्यमाशिषं परिचिन्तयेत्।

तेन सन्ताड़ितो वापि प्रसादमिति संस्मरेत् ॥
भोगभोज्यानि वस्तूनि गुरवे च समर्पयेत् ।
तच्छेषामिति सञ्चिन्त्य चानुभूयात् सुरेश्वरि ! ॥
गुर्वग्रे न तपः कुर्य्यान्नोपवासादिकं व्रतम् ।
तीर्थयात्रां न कुर्य्याच्च न स्नायादात्मशुद्धये ॥
न नियोगं गुरौ दद्याद्युष्मदा नैव भाषयेत् ।
ऋणदानं तथा दानं वस्तूनां क्रयविक्रयौ ॥
न कुर्य्याद्गुरुभिः सार्द्धं शिष्यो भूत्वा कदाचन ।
न कुर्य्यान्नास्तिकैः सार्द्धं सम्भाषणमपीश्वरि ! ॥
विलोक्य दूरतो गच्छेन्नासीत सह तैः क्वचित् ।
गुरौ सन्निहिते यस्तु पूजयेदन्यमम्बिके ! ॥
स याति नरके घोरे सा पूजा निष्फला भवेत् ।
शिरसा न वहेद्भारं गुरुपादाब्जधारिणा ॥
तदाज्ञया तु कर्त्तव्यमाज्ञारूपो गुरुः स्मृतः ।
मन्त्रागमाद्यमन्यत्र श्रुतं तस्मै निवेदयेत् ॥
गुर्वाज्ञया तु गृह्णीयात्तदानिष्टं विवर्जयेत् ।
स्वशास्त्रोक्तं रहस्याद्यं न वदेद्यस्य कस्यचित् ॥
यदि ब्रूयात् स स मया वाच्य एव न संशयः ।
अद्वैतं भावयेन्नित्यमद्वैतं गुरुणा सह ॥
आत्मवत् सर्वभूतेषु हितं कुर्य्यात् कुलेश्वरि ! ।
आत्मात्ममान्यसद्भावैः सुक्रिया स्याच्चतुर्विधा ॥
शुश्रूषया धिया देवि ! शिष्यः सन्तोषयेद्गुरुम् ।
पदे पदेऽश्वमेधस्य फलं प्राप्नोत्यसंशयः ॥
शुश्रूषणपरो यस्तु गुरुदेवमहात्मनाम् ।
केवलं गुरुशुश्रूषा त्वत्कृपाकारिणी प्रिये ! ॥
तद्भक्तिसहिताः सर्वे सर्वकामफलप्रदाः ।

क्षीयन्ते सर्वपापानि वर्द्धन्ते पुण्यराशयः ॥
सिध्यन्ति सर्वकार्य्याणि गुरुशुश्रूषया प्रिये !।
यद्यदात्महितं वस्तु तत्तद्धितमुपाचरेत् ॥
गुरुदेवार्च्चको यस्तु तस्य पुण्यं न गण्यते।
भक्त्या वित्तानुसारेण गुरुमुद्दिश्य यत् फलम् ॥
अल्पे महति वा तुल्यं पुण्यमाढ्यदरिद्रयोः।
सर्वस्वमपि यो दद्याद्गुरौ भक्तिविवर्जितः ॥
शिष्यो न फलमाप्नोति भक्तिरेव हि कारणम्।
यस्मिन् द्रव्ये गुरोरस्ति स्पृहा नानुभवेत्तु तत् ॥
अवश्यं यदि चेच्छा स्यादनुभूयात्तदाज्ञया।
यस्तिलार्द्धं तदर्द्धं वा गुरुस्वमुपजीवति ॥
लोभान्मोहात् स पच्येत नरके च त्रिसप्तकम्।
अत्यल्पं हि गुरुद्रव्यमदत्तं स्वीकरोति यः ॥
तिरश्चां योनिमापन्नः क्रव्यादैर्भक्ष्यते प्रिये !।
गुरुद्रव्याभिलाषी च गुरुस्त्रीगमनोत्सुकः ॥
पतितस्य खलु तस्य प्रायश्चित्तं न विद्यते।
आज्ञाभङ्गोऽर्थहरणं गुरोरप्रियदर्शनम् ॥
गुरुद्रोहमिदं प्राहुर्यः करोति स पातकी।
स्वद्रव्यविनियोगश्च नानिवेद्य गुरोश्चरेत् ॥
अनिवेद्य तु यः कुर्य्यात् स भवेद्ब्रह्मघातकः।
गुरोः स्थानसम्प्रदायी तद्धनं यो विनाशयेत् ॥
गुरुभिः स वहिष्कार्य्यो दण्ड्योऽधन्यः स पातकी।
गुरुकोपाद्विनाशोऽन्यो गुरुद्रोहान्न पातकम् ॥
न स्तुतिर्गुरुनिन्दाया गुर्वनिष्टान्नचापदः।
जीवदग्निप्रविष्टो वा नरः पीतविषोऽपि वा ॥
मृत्युहस्तगतो वापि नापराधकरो गुरौ।

यत्र श्रीगुरुनिन्दा स्यात् पिधाय श्रवणेऽम्बिके ! ॥
सद्यस्तस्मादुपक्रामेद्दूरं न शृणुयाद्यथा ।
गुरोर्नाम जपेत् पश्चात् श्रवणे सा प्रतिक्रिया ॥
गुरुमित्रसुहृत्पत्नीपुत्राद्यं नावमानयेत् ।
न निन्देदस्य समयाञ्जैतच्छास्त्रागमादिकान् ॥
गुरुश्रीपादुकापूजा गुरुनामस्मृतिर्जपः ।
गुर्वाज्ञाकरणं कृत्यं शुश्रूषा भजनं गुरोः ॥
विविक्तुर्देशिको भूयात् शान्तचित्तोऽतिभक्तिमान् ।
वाहनं पादुका छत्रं चामरं व्यजनादिकम् ॥
ताम्बूलमूत्रकोष्णीशमुत्सृज्य प्रविशेच्छनैः ।
पादुकामासनं वस्त्रं वाहनं छत्रचामरम् ॥
दृष्ट्वा गुरोर्नमस्कुर्य्यान्नानुभोगाय कामयेत् ।
पादप्रक्षालनं स्नानं अभ्यङ्गं दन्तधावनम् ॥
मूत्रनिष्ठीवनं क्षौरं शयनं स्त्रीनिषेवणम् ।
वीरासनं सुदुर्वाक्यं शासनं हास्यरोदनम् ॥
केशमोचनमुष्णीषं कञ्चुकं नग्नतां तथा ।
पादप्रसारणं वादकलहं दूषणं प्रिये ! ॥
अङ्गभङ्गाङ्गवाद्यादिकरास्फालनधूननम् ।
द्यूतकुक्कुटमल्लादियुद्धमित्यादि चाम्बिके ! ॥
गुरुयोगिमहासिद्धिपीठक्षेत्रायुमेषु च ।
मा चरेदाचरेन्मोहाद्देवताशापमाप्नुयात् ॥
उपचारेण सन्तिष्ठेद्गुर्वग्रे नेच्छया विशेत् ।
अथावलोको सेवेत तदुक्तञ्च समाचरेत् ॥
गुरूक्तानुक्तकार्य्येषु नोपेक्षां कारयेत् प्रिये ! ।
शिरसा यद्गुरुर्ब्रूयात् तत्कार्य्यमविचारतः ॥
निग्रहोऽनुग्रहो वापि गुरुः सर्वस्य कारणम् ।

निर्गतं यद्गुरोर्वक्रात् सर्वं शास्त्रं तदुच्यते ॥
गुरुकार्य्ये स्वयं शक्तो नापरं प्रेषयेत् प्रिये ! ।
बहुत्वे तत्परैर्भृत्यैः सहितोऽप्यतिभक्तिमान् ॥
गच्छन् तिष्ठन् स्वपन् जाग्रत् जपन् जुह्वत् प्रपूजयन् ।
गुर्वाज्ञामेव कुर्वीत तद्गतेनान्तरात्मना ॥
अभिमानो न कर्त्तव्यो जातिविद्याधनादिभिः ।
सदा च निवसेन्नित्यं शिष्यः श्रीगुरुसन्निधौ ॥
कामक्रोधपरित्यागी विनीतः स्तुतिभक्तिमान् ।
देवि ! भूम्यासने तिष्ठन् गुरुकार्य्यं समाचरेत् ॥
स्वकार्य्यमन्यकार्य्यं वा शिष्यः स्वगुरुचित्तवित् ।
गुरुपार्श्वगतो नम्रः प्रच्छन्नास्यो मितं वदेत् ॥
सामान्यतो निषिद्धञ्च सद्गुरोर्यदि सन्निधौ ।
आचरेत्तस्य सर्वस्य दोषः कोटिगुणो भवेत् ॥
अनादृत्य गुरोर्वाक्यं शृणुयाद्यः पराङ्मुखः ।
अहितं वा हितं वापि रौरवं नरकं व्रजेत् ॥
गोब्राह्मणवधं कृत्वा यत्पापं समवाप्नुयात् ।
तत्पापं समवाप्नोति गुर्वग्रेऽनृतभाषणात् ॥
आत्मनान्तगतेनाथ व्यसने विषमे स्थिते ।
श्रीगुरुं न त्यजेत् क्वापि तदादिष्टो व्रजेत् प्रिये ! ॥
न गच्छेदग्रतस्तस्य न वसेदुत्थिते गुरौ ।
शक्तिच्छायां सुरच्छायां गुरुच्छायां न लङ्घयेत् ॥
न तेषु कुर्य्यात् स्वच्छायां न स्वपेद्गुरुसन्निधौ ।
भाषणं पाठनं स्नानं भोजनं शयनादिकम् ॥
अनादिष्टो न कुर्वीत न चावन्दनपूर्वकम् ।
ब्रह्महत्याशतं कुर्य्याद्गुर्वाज्ञां प्रतिपालयेत् ॥
विना गुर्वाज्ञया शिष्यो विश्वसेन्नान्यशासनात् ।

सर्वं गुर्वाज्ञया कुर्य्यान्न निन्देत्तत्स्त्रियं प्रिये ! ॥
भक्त्या प्रणम्य चोत्तिष्ठेत् कृताञ्जलिपुटः प्रिये ! ।
पश्चात्पदेन निर्गच्छेन्नमस्कृत्य गुरोर्गृहात् ॥
एकासने नोपविशेद् गुरुणा तत्समैः सह ।
न वसेदासने देवि ! देवतागुरुसन्निधौ ॥
गुरोः श्रेष्ठासनं देयं ज्येष्ठानामुत्तमासनम् ।
देश्यासनं कनिष्ठानामितरेषां समासनम् ॥
यदि विद्या धनाढ्यो वा दूरे दृष्ट्वा स्तवादिना ।
दण्डप्रणामं कुर्वीत त्रिः प्रदक्षिणमाचरेत् ॥
तत्त्रिंशद्वा द्वादश वा ज्येष्ठादिष्वेकमेव च ।
गुरुस्तद्गुरुयोगिन वन्देत् श्रीगुरुपादुकाम् ॥
ततो नमेद्गुरुं वापि गुर्वाज्ञां न विचारयेत् ।
श्रीगुरोः सन्निधौ शिष्यो न गुरुं मनसा नमेत् ॥
गुरुबुद्ध्या नमेत् सर्वं देवतां तृणमेव वा ।
न नमेद्देवबुद्ध्या तु प्रतिमां लौहमृण्मयीम् ॥
गुरोः प्रणामत्रितयं ज्येष्ठानामेकमेव च ।
पूज्यानामञ्जलिं तद्वदन्येषां वाक्यवन्दनम् ॥
देवान् पितॄन् कुलाचार्य्यान् ज्ञानवृद्धान् तपोधनान् ।
विद्याधिकान् स्वकर्मस्थान् प्रणमेत् कुलनायिके ! ॥
स्त्रीजितं गुरुभिः शप्तं पाषण्डं पण्डितं शठम् ।
विकर्माणं कृतघ्नञ्च नास्तिकञ्च नो नमेत् ॥
अनिवेद्य गुरौ भुङ्क्ते यस्त्वेकगृहसंस्थितौ ।
अमेध्यं तद्भवेदन्नं शूकरो जायते मृतः ॥
एकग्रामस्थितः शिष्यस्त्रिसन्ध्यं प्रणमेद्गुरुम् ।
क्रोशमात्रस्थितः शिष्यो गुरुं प्रतिदिनं नमेत् ॥
अर्द्धयोजनगः शिष्यः प्रणमेत् पञ्चपर्वसु ।

एकयोजनमारभ्य योजनद्वादशावधिम् ॥
तत्सङ्ख्यादिगतैर्मासैः श्रीगुरुं प्रणमेत् प्रिये !
दूरदेशे स्थिते शिष्ये भक्त्या तत्सन्निधिं गतः ॥
तत्र योजनसङ्ख्यातो विशेषात् प्रणमेद्गुरुम् ।
अतिदूरगतः शिष्यो यदीच्छा स्यात्तदा व्रजेत् ॥
रिक्तहस्तश्च नोपेयाद्राजानं देवतां गुरुम् ।
फलपुष्पाम्बराकल्पैर्यथाशक्त्या समर्च्चयेत् ॥
एवं यो न चरेद्देवि ! ब्रह्मराक्षसतां व्रजेत् ।
गुरुशक्तिश्च तत्पुत्रो ज्येष्ठभ्राता गुरोः समः ॥
आत्मवच्च कनीयांसं पालयेत् पुत्रवत्कुलम् ।
कुलाचार्य्यस्य देवेशि ! गुरुज्येष्ठकनिष्ठयोः ॥
गुरुकल्पस्य कुर्वीत प्रणामं स्वगुरोर्यथा ।
स्वज्येष्ठश्च क्रमज्येष्ठः कुलज्येष्ठस्तृतीयकम् ॥
गुरुज्येष्ठस्ततो देवि ! इति ज्येष्ठचतुष्टयम् ।
यावद्ज्येष्ठानुवादेन क्रमिकाष्टाङ्गयोगतः ॥
गुरोश्च कुलवृक्षस्य वन्दनानि विधानतः ।
पितृमात्रादिसर्वेषु पूज्यकोटिषु बन्धुषु ॥
अभ्युत्थानप्रणामाद्यैरव्यग्रक्रोधलाघवैः ।
तद्यदाचार्य्यरूपेण चात्मानं सम्प्रकाशयेत् ॥
अभ्युत्थानप्रणामाद्यैर्द्वेषभाक् स न जायते ।
पतिर्भूत्वा पशून् पश्चात् प्रणमेत् पशुदेशिकः ॥
स महापशुरित्युक्तो देवताशापमाप्नुयात् ।
यो गुरुस्थानमालम्ब्य गुरुदाराभिवन्दनम् ॥
गुरुवत् स तु मन्तव्यो ज्येष्ठपुत्रेषु च प्रिये ! ।
इति ते कथितं किञ्चित् पादुकां भक्तिलक्षणाम् ।
समासेन कुलेशानि ! किम्भूयः श्रोतुमिच्छसि ॥

इति कुलार्णवे महारहस्ये पादुकाकथनं नाम द्वादशोल्लासः ।

# त्रयोदश उल्लासः ।

देव्युवाच । कुलेश ! श्रोतुमिच्छामि करुणामृतवारिधे ! ।
वक्तुमर्हसि देवेश ! लक्षणं गुरुशिष्ययोः ॥
ईश्वर-उवाच । शृणु देवि ! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण गुरुभावः प्रजायते ॥
नष्टान्वयवजं चैव गुणहीनं निरूपितम् ।
परशिष्यञ्च पाषण्डं षण्डं पण्डितमानिनम् ॥
हीनाधिकविकाराङ्गं विकलावयवान्वितम् ।
पङ्गुमन्धञ्च वधिरं मलिनं व्याधिपीड़ितम् ॥
उत्सृष्टं दुर्मुखं चापि स्वेच्छावेशधरं परम् ।
दुर्विकाराङ्गचेष्टादिगतिभीषणभीषणम् ॥
निद्रातन्द्राजड़ालस्यद्यूतादिव्यसनान्वितम् ।
अन्तर्भक्तिकरं क्षुद्रं राज्यभक्तिविवर्जितम् ॥
व्यलीकवादिनं शुष्कं प्रेषितं प्रेरकं शठम् ।
धनस्त्रीशुद्धिरहितं निषेधविधिवर्जितम् ॥
रहस्यभेदकं वापि देवि ! कार्य्यविनाशकम् ।
मार्जारवकवृत्तिञ्च रन्ध्रान्वेषणतत्परम् ॥
मायाविनं कृतघ्नञ्च प्रच्छन्नान्तरदायकम् ।
विश्वासघातिनं द्रोहकारिणं पापकर्मिणम् ॥
आततायिनमेकाक्षं कुत्सितं कूटसाक्षिणम् ।
सर्वप्रतारकं देवि ! सर्वोत्कृष्टाभिमानिनम् ॥
असत्यं निष्ठुरासक्तं ग्राम्यादिबहुभाषिणम् ।
कुविचारकुतर्कादिकारकं कलहप्रियम् ॥
हयाक्षेपकरं मूर्खं चार्वाकं वाग्विड़म्बकम् ।
परोक्षे दूषणकरं प्रत्यक्षे प्रियवादिनम् ॥
वाग्ब्रह्मवादिनं विद्याचौरमात्मप्रशंसकम् ।

गुणासहिष्णुमहितमात्मक्रोधनमम्बिके ! ॥
इत्यादिदोषसंयुक्तं गुरुः शिष्यं न कारयेत्।
निरपेक्षं गुरुद्रव्ये तत्प्रसादाभिकाङ्क्षिणम् ॥
कुलधर्म-महायोगि-योगिनीकौलिकप्रियम्।
कुलार्चनादिनिरतं कुलद्रव्याजुगुप्सनम् ॥
जपध्यानादिनिरतं सौख्यमाज्ञादिकाङ्क्षिणम्।
कुलशास्त्रप्रियं देवि पृथक्शास्त्रपराङ्मुखम् ॥
इत्यादिलक्षणोपेतं गुरुः शिष्यं परिग्रहेत्।
श्रीगुरुः परमेशानि ! शुद्धवेशो मनोहरः ॥
सर्वलक्षणसम्पन्नः सर्वावयवशोभितः।
सर्वागमार्थतत्त्वज्ञः सर्वतन्त्रविधानवित् ॥
लोकसम्मोहनाकारो देववत् प्रियदर्शनः।
सुमुखः सुलभः स्वच्छो भ्रमसंशयनाशकः ॥
इङ्गिताकारवित् प्राज्ञः ऊहापोहविचक्षणः।
अन्तर्लक्ष्यो वहिर्दृष्टिः सर्वज्ञो देशकालवित् ॥
आज्ञासिद्धिस्त्रिकालज्ञो निग्रहानुग्रहक्षमः।
वेधको बोधकः शान्तः सर्वजीवदयाकरः ॥
स्वाधीनेन्द्रियसञ्चारषड्वर्गविजयप्रदः।
अग्रगण्योऽतिगम्भीरः पात्रापात्रविशेषवित् ॥
शिवविष्णुसमः साधुमनुभूषणभूषितः।
निर्ममो नित्यसन्तुष्टः स्वतन्त्रोऽनन्तशक्तिमान् ॥
सद्भक्तवत्सलो धीरः कृपालुः स्मितपूर्ववाक्।
भक्तप्रियः समो देवि ! गम्भीरः शिष्टसाधकः ॥
ज्येष्ठो देवगुरुश्रेष्ठो वनितापूजनोत्सुकः।
नित्यनैमित्तिके काम्ये रतः कर्मण्यनिन्दिते ॥
रागद्वेषभयक्लेशदम्भाहङ्कारवर्जितः।

स्वविद्यानुष्ठानरतो धर्मज्ञानार्थदर्शकः ॥
यदृच्छालाभसन्तुष्टो गुणदोषविभेदकः ।
स्त्रीधनादिष्वनासक्तो दुःसङ्गो व्यसनादिषु ॥
सर्वाहम्भावसन्तुष्टो निर्द्वन्द्वो नियतव्रतः ।
अलोलुपो ह्यसङ्गश्च पक्षपाती विचक्षणः ॥
वित्तविद्यादिभिर्मन्त्रयन्त्रतन्त्रार्चविक्रयी ।
निःसङ्गी निर्विकल्पश्च निर्णीतात्मातिधार्मिकः ॥
तुल्यनिन्दास्तुतिर्मौनी निरपेक्षो नियामकः ।
इत्यादिलक्षणोपेतः श्रीगुरुः कथितः प्रिये ! ॥
यः शिवः सर्वगः सूक्ष्मो निष्कलश्चोन्मना व्ययः ।
व्योमाकारो ह्यजोऽनन्तः स कथं पूज्यते प्रिये ! ॥
अतएव गुरुः साक्षाद् गुरुरूपं समाश्रितः ।
भक्त्या सम्पूजयेद्देवि ! भुक्तिं मुक्तिं प्रयच्छति ॥
शिवोऽहमाकृतिर्देवि ! नरदृग्गोचरो न हि ।
तस्मात् श्रीगुरुरूपेण शिष्यान् रक्षति सर्वदा ॥
मनुष्यचर्मणा नद्धः साक्षात् परशिवः स्वयम् ।
स्वशिष्यानुग्रहार्थाय गूढ़ं पर्य्यटति क्षितौ ॥
सद्भक्तरक्षणायैव निरहङ्कारमाकृतिः ।
शिवः कृपानिधिर्लोके संसारीव हि चेष्टितः ॥
ललाटलोचनं वा स्त्री कलामपि च दोर्द्वयम् ।
अन्तर्ध्याने च वर्त्मोऽयं गुरुरूपो महीतले ॥
अत्रिनेत्रशिवः साक्षादचतुर्बाहुरच्युतः ।
अचतुर्वदनो ब्रह्मा श्रीगुरुः कथितः प्रिये ! ॥
नरवद् दृश्यते लोके श्रीगुरुः पापकर्मणा ।
शिववद् दृश्यते लोके भवानि ! पुण्यकर्मणा ।
श्रीगुरुं परमं तत्त्वं तिष्ठन्तं चक्षुरग्रतः ॥

मन्दभाग्या न पश्यन्ति शुल्काः सूर्यमिवोदितम्।
गुरुः सदाशिवः साक्षात् सत्यमेव न संशयः॥
शिवरूपो गुरुर्नो चेद् भुक्तिं मुक्तिं ददाति कः।
सदाशिवस्य देवस्य श्रीगुरोरपि पार्वति!॥
उभयोरन्तरं नास्ति यः करोति स पातकी।
देशिकाकृतिमास्थाय पशुपाशानशेषतः॥
छित्वा परं पदं देवि! नयत्येवमतो गुरुः।
सर्वानुग्रहकर्त्तृत्वादीश्वरः करुणानिधिः॥
आचार्यरूपमास्थाय दीक्षया मोक्षयेत् पशून्।
यथा घटश्च कलसः कुम्भश्चैकार्थवाचकः॥
तथा देवश्च मन्त्रश्च गुरुश्चैकार्थ उच्यते।
यथा देवस्तथा मन्त्रो यथा मन्त्रस्तथा गुरुः॥
देवमन्त्रगुरूणाञ्च पूजायाः सदृशं फलम्।
शिवरूपं समास्थाय पूजां गृह्णाति पार्वति!॥
गुरुरूपं समादाय भवपाशान्निकृन्तयेत्।
सिद्धान्तसारवेत्ताहं वीजोऽहमिति बोधकृत्॥
अविच्छिन्न-समाहृष्टहृदयो गुरुरुच्यते।
यो विलङ्घ्याश्रमान् वर्णानात्मन्येव स्थितः सदा॥
ज्योतिर्वर्णाश्रमी योगी स गुरुः कथितः प्रिये!।
षड़ध्वानं षड़ाधारं षोड़शारविनिर्णयम्॥
यो जानाति विधानेन स गुरुः कथितः प्रिये!।
दृश्यं विना स्थिरा दृष्टिर्मनश्चालम्बनं विना॥
विनायासं स्थिरो वायुर्यस्य स्यात् स गुरुः प्रिये!।
सत्त्वसंवित्तिजननं परानन्दसमुद्भवम्॥
तत्तत्त्वं विदितं येन स गुरुः कुलनायिके!।
भूतभव्यो मन्त्रतन्त्रौ शक्तिशाम्भववित्तमः॥

वेधञ्च षड़विधं देवि! स हि वेत्ति परो गुरः।
पदमन्त्रकलायन्त्र सतत्त्वतद्गुणाह्वयम्॥
शोधयेद्यः षड़ध्वानं स गुरुः कथितः प्रिये!।
वेधं पदं निरोधञ्च ग्रहणं मोचणं तथा॥
यो वा सम्यग्विजानाति स गुरुः कथितः प्रिये!।
जाग्रत् स्वप्नः सुषुप्तिश्च स गुरुः परमो मतः॥
आत्मविद्या शिवः सर्वमिति विद्याचतुष्टयम्।
यो वेत्ति परमेशानि! स गुरुः परमो मतः॥
पशुस्तोभं वेधदीचां पशुप्रहरमेव च।
त्रिविधं यो विजानाति स गुरुः परमो मतः॥
पदपाशं पशूनाञ्च रहस्यात्मविधानतः।
यो जानाति वरारोहे! स गुरुः परमो मतः॥
चक्रसङ्केतकं मन्त्रपूजासङ्केतकं तथा।
त्रितयं यो विजानाति स गुरुः परमो मतः॥
वाणेतरस्वयम्भ्वाख्यलिङ्गत्रितयसंस्थितिम्।
तत्त्वतो यो विजानाति स गुरुः परमो मतः॥
आनव्यं कार्मणञ्चैव मायिकञ्च मलत्रयम्।
यो विशोधयितुं शक्तः स गुरुः परमो मतः॥
आरक्तशुक्लमिश्राख्यचरणत्रयवासनाम्।
यो जानाति महादेवि! स गुरुः परमो मतः॥
महामुद्रां नभोमुद्रां उड्डीयानं जालन्धरम्।
मूलबन्धञ्च यो वेत्ति स गुरुः परमो मतः॥
शिवादिक्षितिपर्य्यन्तं षट्त्रिंशत्तत्त्वनिर्णयम्।
यो विजानाति तत्त्वेन स गुरुः परमो मतः॥
अन्तर्यागं वहिर्यागं कालज्ञानं स्थितं प्रिये!।
त्रिविधानञ्च यो वेत्ति स गुरुः परमो मतः॥

पिण्डब्रह्माण्डयोरैक्यं स्थितं यो वेत्ति तत्त्वतः।
शिरास्थिरोमसङ्ख्यादि स गुरुः परमो मतः॥
पद्मादिचतुरशीतिनानासनविचक्षणः।
यमाद्यष्टाङ्गयोगज्ञः स गुरुः परमो मतः॥
घृणा लज्जा भयं शोको जुगुप्सा चेति पञ्चमम्।
कुलं शीलं तथा जातिरष्टौ पाशाः प्रकीर्त्तिताः॥
पाशबद्धः पशुर्ज्ञेयः पाशमुक्तो महेश्वरः।
तस्मात् पाशहरो यस्तु स गुरुः परमो मतः॥
बन्धनं योनिमुद्रया मन्त्रं चैतन्यसंज्ञकम्।
यन्त्रमन्त्रस्वरूपञ्च यो वेत्ति स गुरुः प्रिये!॥
विनिक्षिप्तां गतायातां संश्लिष्टां संविनीतकाम्।
चतुर्विधां मनोऽवस्थां यो जानाति गुरुः प्रिये!॥
मूलादिब्रह्मरन्ध्रान्तं सप्ताम्भोजं कुलेषु यः।
जीवाचारफलं वेत्ति स गुरुर्नापरः प्रिये!॥
शिवादिगुरुपर्य्यन्तं पारम्पर्य्यक्रमेण यः।
अवाप्ततत्त्वसम्भारः स गुरुः परमो मतः॥
येन वा दर्शिते तत्त्वे तत्क्षणात्तन्मयो भवेत्।
धन्यं तदुक्तमखिलं स गुरुः परमो मतः॥
यो वेत्ता सच्चिदानन्दं हरेदिन्द्रियजं सुखम्।
सेव्यास्ते गुरवः शिष्यैरन्ये त्याज्याः प्रतारकाः॥
संसारभयभीतस्य भयहा गुरुरादरात्।
व्रतोपवासनियमैर्नियन्ता स गुरुर्मतः॥
यः प्रसन्नः क्षणार्द्धेन मोक्षरत्नं प्रयच्छति।
दुर्लभं तं विजानीयाद् भवसागरतारकम्॥
यः क्षणेनात्मसामर्थ्यं स्वशिष्याय ददाति हि।
क्रियायासादिरहितः स गुरुर्दैवदुर्लभः॥

यः सद्यः प्रत्ययकरं सुलभं चात्मसौख्यदम्।
ज्ञानोपदेशं कुरुते स गुरुर्देवदुर्लभः ॥
द्वीपाद्वीपान्तरं देवि ! सञ्चरेत्तद्यथा तथा ।
यो दद्यात् स गुरुर्ज्ञानमभ्यासादिविवर्जितम् ॥
क्षुधितस्य यथा तुष्टिराहाराद्दृश्यते यथा ।
तथोपदेशमात्रेण ज्ञानदो दुर्लभो गुरुः ॥
गुरवो बहवः सन्ति दीपवच्च गृहे गृहे ।
दुर्लभोऽयं गुरुर्देवि ! सूर्य्यवत् सर्वदीपकः ॥
गुरवो बहवः सन्ति वेदशास्त्रादिपारगाः ।
दुर्लभोऽयं गुरुर्देवि ! परतत्त्वार्थपारगः ॥
गुरवो बहवः सन्ति योगेनान्यत् पदा भुवि ।
दुर्लभोऽयं गुरुर्देवि ! लोके स्वात्मप्रकाशकः ॥
गुरवो बहवः सन्ति समन्त्रौषधिवेदिनः ।
निगमागमशास्त्रोक्तमन्त्रज्ञो दुर्लभो भुवि ॥
गुरवो बहवः सन्ति शिष्यवित्तापहारकाः ।
दुर्लभोऽयं गुरुर्देवि ! शिष्यदुःखापहारकः ॥
वर्णाश्रमकुलाचारनिरता गुरवो भुवि ।
सर्वसङ्कल्पहीनो यः स गुरुर्देवि ! दुर्लभः ॥
गुरोर्यस्यैव संस्पर्शात् परानन्दोऽभिजायते ।
गुरुं तमेव वृणुयान्नापरं मतिमान्नरः ॥
यस्यात्मभवपर्य्यन्तं बुद्धिस्तस्य प्रवर्त्तते ।
तस्यालोकनमात्रेण मुच्यते नात्र संशयः ॥
शङ्कया भक्षितं सर्वं त्रैलोक्यं सचराचरम् ।
सा शङ्का भक्षिता येन स गुरुर्देवदुर्लभः ॥
यथा वह्निसमीपस्थं नवनीतं विलीयते ।
तथा पापं विलीयेत सदाचार्य्यसमीपतः ॥

यथा दीप्तानलः काष्ठं शुष्कमात्रञ्च निर्दहेत्।
तथा गुरुकटाक्षस्तु शिष्यपापं दहेत् क्षणात्॥
यथा महानिलोद्भूतं तूलं दशदिशो व्रजेत्।
तथैव गुरुकारुण्यात् पापराशिः प्रलीयते॥
दीपदर्शनमात्रेण प्रणश्यति तमो यथा।
सद्गुरोर्दर्शनाद्देवि! तथाऽज्ञानं विलीयते॥
सर्वलक्षणसम्पन्नो वेदशास्त्रविधानवित्।
सर्वोपायविधातैव तत्त्वज्ञानी गुरुः स हि॥
पूजाहोमाश्रमाचारस्तपस्तीर्थव्रतादिकम्।
मन्त्रागमादिविज्ञानं तत्त्वहीनस्य निष्फलम्॥
सुसंवेद्यं परे तत्त्वे स्वात्मानं वेत्ति निश्चलः।
आत्मनोऽनुग्रहो नास्ति परस्यानुग्रहः कुतः॥
षट्प्रकारं मनोरूपं प्रत्यक्षं स्वतनुस्थितम्।
यो न जानाति चान्यस्य कथं मोक्षं ददात्यसौ॥
सर्वलक्षणहीनोऽपि तत्त्वज्ञानी गुरुः स्मृतः।
तस्मात्तत्त्वविदेवेह मुक्तो मोचक एव च॥
यस्तत्त्वविन्महेशानि! साधूंश्च बोधयत्यपि।
तत्त्वहीनात् कुतो बोधः कुतोऽध्यात्मपरिग्रहः॥
तत्त्वज्ञैरुपदिष्टा ये तत्त्वज्ञास्ते न संशयः।
पशुभिश्चोपदिष्टा ये देवि! ते पशवः स्मृताः॥
विद्धस्तु वेधयेद्देवि! नाविद्धो वेधको भवेत्।
मुक्तस्तु मोचयेद्दूरं न मुक्तो मोचकः कथम्॥
अभिज्ञश्चोद्धरेन्मूर्खं न मूर्खो मूर्खमुद्धरेत्।
शिलां सन्तारयेन्नौर्हि न शिला तारयेच्छिलाम्॥
तत्त्वहीनं गुरुं लब्ध्वा केवलं भवतत्परः।
इहामुत्रफलं किञ्चिन्नापरो नाप्नुयात् प्रिये!॥

शिवे गुरुत्रयं प्रोक्तं वैष्णवे गुरुपञ्चकम् ।
वेदशास्त्रेषु शतशो गुरुरेकः कुलप्रियः ॥
प्रेरकः सूचकश्चैव वाचको दर्शकस्तथा ।
शिक्षको बोधकश्चैव षड़ेते गुरवः स्मृताः ॥
पञ्चैते कार्य्यभूताः स्युः कारणं बोधको भवेत् ।
पूर्णाभिषेककर्त्ता यो गुरुस्तस्यैव पादुकाः ॥
पूजनीया महेशानि ! बहुत्वेऽपि न संशयः ।
श्रीगुरोर्लक्षणोपेतं संशयच्छेदकारकम् ॥
लब्ध्वा ज्ञानप्रदं देवि ! न गुर्वन्तरमाश्रयेत् ।
अनभिज्ञं गुरुं प्राप्य संशयच्छेदकारकम् ॥
गुर्वन्तरन्तु गत्वा स नैतद्दोषेण लिप्यति ।
मधुलुब्धो यथा भृङ्गः पुष्पात् पुष्पान्तरं व्रजेत् ॥
ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत् ।
इति ते कथितं किञ्चिल्लक्षणं गुरुशिष्ययोः ।
समासेन कुलेशानि ! किम्भूयः श्रोतुमिच्छसि ॥

इति कुलार्णवे महारहस्ये गुरुशिष्यलक्षणं नाम त्रयोदश उल्लासः ।

---

## चतुर्दश उल्लासः ।

देव्युवाच । कुलेश ! श्रोतुमिच्छामि परीक्षां गुरुशिष्ययोः ।
उपदेशक्रमं दीक्षाभेदांश्च वद मे प्रभो ! ॥
ईश्वर उवाच । शृणु देवि ! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण चित्तशुद्धिः प्रजायते ॥
विना दीक्षां फलं न स्याद् यमिनां शिवशासने ।
सा च न स्याद्विनाचार्य्यमित्याचार्य्यपुरःसरम् ॥
ज्ञेया सिद्धार्थशास्त्रार्थसम्प्रदायार्द्धहेतुभिः ।
अन्तरेणोपदेष्टारं मन्त्राः स्युर्निष्फला यतः ॥

देवास्तमेव शंसन्ति पारम्पर्य्यपुरःसरम्।
गुरुं मन्त्रागमाविज्ञं समयाचारपालकम्॥
गुरुशिष्याधिकारार्थं विरक्तोऽपि शिवाज्ञया।
किञ्चित्कालं विधायेत्थं स्वशिष्याय समर्पयेत्॥
तस्यापि नाधिकारस्य योगः साक्षात् परे शिवे।
देहान्ते शाश्वती मुक्तिरिति शङ्करभाषितम्॥
तस्मात् सर्वप्रयत्नेन साक्षात् परशिवोदितम्।
सम्प्रदायपरिच्छिन्नं सदा कुर्य्यात् गुरुं प्रिये!॥
शक्तिसिद्धिमसिद्धार्थं परीक्ष्य विधिवद् गुरुः।
पश्चादुपदिशेन्मन्त्रमन्यथा निष्फलं भवेत्॥
अन्यायेन तु यो दद्याद् गृह्णात्यन्यायतश्च यः।
ददतो गृह्णतो देवि! कुलशापो भविष्यति॥
गुरुशिष्यावुभौ मोहादपरीक्ष्य परस्परम्।
उपदेशं ददद् गृह्णन् प्राप्नुयातां पिशाचताम्॥
अशास्त्रीयोपदेशञ्च यो गृह्णाति ददाति हि।
भुञ्जाते तावुभौ घोरे नरकानेकविंशतीः॥
परीक्ष्य वक्ष्यते तन्त्रं सेकतं शालिवीजवत्।
अनर्हे मन्त्रविज्ञानं न तिष्ठति कदाचन॥
तस्मात् परीक्ष्य कर्त्तव्यमन्यथा निष्फलं भवेत्।
ज्ञात्वा समयदीक्षाञ्च दत्त्वा समयपादुकाम्॥
संविधायात्मनः शिष्यं वदेन्मन्त्रं न चान्यथा।
सच्छिष्यायातिभक्ताय यज्ज्ञानमुपदिश्यते॥
तज्ज्ञानं वहुशास्त्रार्थं तद्विदध्यादखण्डितम्।
असच्छिष्येष्वभक्तेषु यज्ज्ञानमुपदिश्यते॥
तत् प्रयात्यपवित्रत्वं गोक्षीरं श्वदृतादिव।
धनेच्छाभयलोभाद्यैरयोग्यं यदि दीक्षयेत्॥

देवताशापमाप्नोति कृतञ्च निष्फलं भवेत् ।
ज्ञानेन क्रियया वापि गुरुः शिष्यं परीक्षयेत् ॥
संवत्सरं तदर्द्धं वा तदर्द्धं वा प्रयत्नतः ।
उत्तमांश्चाधमे कुर्य्यान्नीचानुत्तमकर्मणि ॥
प्राप्यद्रव्यैः प्रदानाद्यैरादेशैश्च समासमैः ।
तत्कर्मसूचकैर्वाक्यैर्मायाभिः क्रूरचेष्टितैः ॥
पक्षपातैरुपादानैरालस्यैश्च मुहुर्मुहुः ।
आक्रुष्टस्ताड़ितो वापि यो विषादं न याति च ॥
गुरुः कृपां करोतीति मुदा सञ्चिन्तयेत् सदा ।
श्रीगुरुस्मरणे चापि कीर्त्तने दर्शनेऽपि च ॥
वन्दने परिचर्य्यायामाह्वाने प्रेषणे प्रिये ! ।
आनन्दकम्परोमाञ्चस्वरनेत्रादिविक्रियाः ॥
येषां स्युः स्तोत्रयोगाश्च दीक्षासंस्कारकर्मणि ।
शिष्योऽपि लक्षणैरेतैः कुर्य्याद् गुरुपरीक्षणम् ॥
आनन्दाद्यैर्जपस्तोत्रध्यानहोमार्चनादिभिः ।
ज्ञानोपदेशसामर्थ्यं मन्त्रसिद्धिमपीश्वरि ! ।
बोधकत्वं परिज्ञाय शिष्यो भूयान्न चान्यथा ॥
आदिमध्यावसानेषु योग्या शक्तिः निपातिता ।
अधमा मध्यमाः श्रेष्ठाः शिष्या देवि ! प्रकीर्त्तिताः ॥
आदौ भक्तिर्भवेद्देवि ! दीक्षार्थं समुदन्ति ये ।
पुनर्विह्वलहृष्टास्ते आदियोग्या इतीरिताः ॥
दीक्षासमयसम्प्राप्ता ज्ञानाज्ञानविवर्जिताः ।
भक्त्या प्रध्वस्तसुधियो मध्ययोग्याश्च ते स्मृताः ॥
आदौ भक्तिविहीना ये मध्यभक्तास्तु ये नराः ।
अन्ते भक्ताः प्रबुद्धाः स्युर्ह्यन्तयोग्या भवन्ति ते ॥
उत्तमाज्ञानसंज्ञाश्चेदुपदेशस्त्रिधा प्रिये ! ।

यथा पिपीलिका मन्दमन्दं वृक्षाग्रगं फलम्॥
चिरेणाप्नोति धर्मोपदेशश्चापि तथा स्मृतः।
यथा कपिश्च शाखायां शाखामुल्लङ्घ्य यत्नतः॥
फलं प्राप्नोति धर्मस्य चोपदेशस्तथा प्रिये!।
यथा वियद्गमः शीघ्रं फल एव निषीदति॥
तथा ज्ञानोपदेशश्च कथितः कुलनायिके!।
क्रियायासादिरहिता देवि! दीक्षा त्रिधा स्मृता॥
यथा पक्षी स्वपक्षाभ्यां शिशून् समुद्धरेत् शनैः।
स्पर्शदीक्षोपदेशश्च तादृशः कथितः प्रिये!॥
स्वापत्यानि यथा मत्स्यो वीक्षणेनैव पोषयेत्।
दृग्भ्यां दीक्षोपदेशश्च तादृशः परमेश्वरि!॥
यथा कूर्मः स्वतनयान् ध्यानमात्रेण पोषयेत्।
वेधदीक्षोपदेशश्च मानुषस्य तथा विधिः॥
शक्तिमात्रानुसारेण शिष्योऽनुग्रहमर्हति।
यत्र शक्तिर्न पतति तत्र सिद्धिर्न जायते॥
दीक्षा मोक्षप्रदा देवि! सप्तधा परिकीर्त्तिताः।
समयाख्या विशेषा च साधिका पुत्त्रिकाह्वया॥
क्रियाज्ञानकलास्पर्शज्ञानध्यानसमाकुलाः।
वेधकाः पूर्णसंज्ञाः स्युश्चर्या निर्वाणसंज्ञकाः॥
क्रियादीक्षाष्टधा प्रोक्ता कुलमण्डपपूर्विका।
कलसादिसमायुक्ता कर्त्तव्या गुरुणा वहिः॥
देवेशि! देहसिद्ध्यर्थं पूर्वोक्तविधिनाचरेत्।
परमात्मनि संयोज्य तच्चैतन्यं गुरुः प्रिये॥
तस्मादुत्पाद्य तान् वर्णान् न्यसेच्छिष्यतनौ पुरः।
सृष्टिक्रमेण विधिना चैतन्यञ्च प्रयोजयेत्॥
वर्णदीक्षा त्रिधा प्रोक्ता द्विचत्वारिंशदक्षरैः।

पञ्चाशद्वर्णैर्वा देवि ! द्विषष्टिलिपिभिस्तु वा ॥
वर्णान् शिष्यतनौ न्यस्य प्रतिलोमेन सञ्चरेत् ।
जायते देवताभावः परातीतमयः शिशोः ॥
एषा वर्णमयी प्रोक्ता दीक्षा पापहरा प्रिये ! ।
कलादीक्षा च विज्ञेया कर्त्तव्या विधिवत् प्रिये ! ॥
निवृत्तिजानुपर्य्यन्तं तलादारभ्य संस्थितः ।
जानोश्च नाभिपर्य्यन्तं प्रतिष्ठा तिष्ठति प्रिये ! ॥
नाभौ कण्ठावधि प्रोक्ता विद्याशान्तिस्ततः प्रिये ! ।
कण्ठाल्ललाटपर्य्यन्तं व्याप्ता तस्माच्छिरोऽवधि ॥
शान्त्यतीता कला चैषा कला व्याप्तिरितीरिता ।
संहारक्रमयोगेन स्थानात् स्थानान्तरं प्रिये ! ॥
संयोज्य विषये सम्यक् विधिवित्ता शिरोऽवधि ।
इयं प्रोक्ता कुलेशानि ! दिव्यभावप्रदायिनी ॥
चित्तं तत्त्वोत्कलाभिर्वा पञ्चाशद्भिरथापि वा ।
तत्त्वन्यासक्रमेणैव सृष्टिसंहारमार्गतः ॥
ज्ञात्वा गुरुमुखाद्देवि ! शिष्ये संयोज्य वेधयेत् ।
जायते देवताभावो योगिनीवीरसङ्गमः ॥
कलादीक्षा समुद्दिष्टा पशुपाशापहारिणी ।
हस्ते शिवं गुरुं ध्यात्वा जपेन्मूलाङ्गमालिनीम् ॥
गुरुः स्पृशेत् स्वशिष्यस्य स्पर्शदीक्षा भवेदियम् ।
चित्तं तत्त्वे समाधाय परतत्त्वोपबृंहितात् ॥
उच्चरेत् संहृतान्मन्त्री वाग्दीक्षेति निगद्यते ।
निमील्य नयने ध्यात्वा परतत्त्वे प्रसन्नधीः ॥
सम्यक्पश्येद्गुरुः शिष्यं दृग्दीक्षा च भवेत् प्रिये ! ।
गुरोरालोकमात्रेण भाषणात् स्पर्शनादपि ॥
सद्यः सञ्जायते ज्ञानं सा दीक्षा शाम्भवी मता ।

मनोर्दीक्षा द्विधा प्रोक्ता तीव्रा तीव्रतमापि च॥
अध्वानं षड्विधं ज्ञात्वा शिष्यदेहे स्मरन् प्रिये!।
कल्पयेद्भुवनं तत्त्वं कलावर्णपदं मनुम्॥
आजानुनाभिहृत्कण्ठतालुमूलान्तमम्बिके!।
गुरूपदिष्टमार्गेण वेधं कुर्य्याद्विचक्षणः॥
पापमुक्तः क्षणाच्छिष्यश्छिन्नपाशस्तथा भवेत्।
बाह्यव्यापारनिर्मुक्तो भूमौ पतति तत्क्षणात्॥
सञ्जातदिव्यभावोऽसौ सर्वं जानाति शाम्भवि!।
यदस्ति वेधकं तत्तत् स्वयमेवानुभूयते॥
प्रबुद्धः सहसा शिष्टस्तत् सौख्यं बहुधेश्वरि!।
वेधविद्धः शिवः साक्षान्न पुनर्जन्मतां व्रजेत्॥
एषा तीव्रतरा दीक्षा भवबन्धविमोचनी।
शिवभावप्रदा देवि! त्वां शपे कुलनायिके!॥
आनन्दश्चैव कम्पश्चोद्भवो घूर्णा कुलेश्वरि!।
निद्रा मूर्च्छा च वेधस्य षड़वस्थाः प्रकीर्त्तिताः॥
दृश्यन्ते षड्गुणा ह्येते वेधनेन कुलेश्वरि!।
वेधकौ यत्र कुत्रापि तिष्ठेन्मुक्तो न संशयः॥
वेधदीक्षाकरो लोके श्रीगुरुर्दुर्लभः प्रिये!।
शिष्योऽपि दुर्लभस्तादृक् पुण्ययोगेन लभ्यते॥
न दद्याद्यस्य कस्यापि इत्याज्ञा परमेश्वरि!।
कुलद्रव्यैः समभ्यर्च्य कुलद्रव्यं विधानतः॥
शिष्याय दर्शयेद्देवि! दीक्षैषा कौलिकी स्मृता।
शिवद्रव्यं मुखे पूर्य्य पञ्चगव्यामृतान्वितम्॥
अभिषिञ्चेद्गुरुः शिष्यं गण्डूषाख्या समीरिता।
स वीजमीनयुक्तेन सुरया पूरितेन च॥
पञ्चामृतैः सुसम्पूर्णशङ्खेन कलसेन वा।

अभिषेकं ततः कुर्य्याद्वाह्यतः कथितं प्रिये ! ॥
मनस्तु लम्बिका देवो वज्रं कलसमुच्यते ।
पञ्चगव्यामृतापूर्णं शिष्यं तेनाभिषिञ्चति ॥
अहं सिद्धाभिषेकः स्यादाचार्य्योऽपि च पार्वति ! ।
त्रिकालं दन्तकाष्ठञ्च पुष्पाञ्जलिरपि प्रिये ! ॥
शङ्खोदके कलान्यासं तज्ज्ञानं चाष्टधा भवेत् ।
समयी दन्तकाष्ठेन साधकः कुसुमाञ्जलिः ॥
पुत्रं शङ्खाभिषेकेण बोधकं सज्जलेन च ।
पूर्णाभिषेकेणाचार्य्यं पञ्चावस्थाः प्रकीर्त्तिता ॥
कुलाचारेण निरता गुरुभक्ता दृढ़व्रताः ।
पूर्णाभिषेकपूता ये ते मुक्ताश्चेह कर्मणि ॥
पूर्णाभिषेकपूता ये मृताश्च कुलनायिके ! ।
पुनर्लब्धोत्तमं जन्म गुरुणा शिवरूपिणा ॥
शुद्धा पूर्णाभिषेकेण शिवसायुज्यदायिना ।
तेन मुक्तिं व्रजेदेव शाम्भवी वाचमब्रवीत् ॥
पूर्णाभिषेकहीनो यः कौलिको म्रियते यदि ।
पिशाचत्वमवाप्नोति यावदाभूतसंप्लवम् ॥
दीक्षा च द्विविधा प्रोक्ता वाह्याभ्यन्तरभेदतः ।
क्रियादीक्षा भवेद्वाह्या वेधाख्याभ्यन्तरी मता ॥
अन्तःशुद्धिर्वहिःशुद्धिर्द्विविधा परिकीर्त्तिता ।
अन्तरा च क्रियाशुद्धिर्वहिःशुद्धिश्च दीक्षया ॥
दीक्षया मोक्षदीपेन चण्डालोऽपि विमुच्यते ।
शरीरस्य न संस्कारो न जातिर्न च कर्मणः ॥
आत्मनः कारयेद्दीक्षामनादिकुलकुण्डलीम् ।
दीक्षा याता कर्मसाम्ये भिन्नाः स्युः प्रतिपादिकाः ॥
अभिसन्धानतो देवि ! देशिकोत्तमशिष्ययोः ।

मन्त्रौषधैर्यथा हन्याद्विषशक्तिं कुलेश्वरि ! ॥
पशुपाशं तथा छिन्द्याद्दीक्षया मन्त्रवित् क्षणात्।
अकस्मात् प्रतितत्त्वेभ्यात् परसंस्थानबोधनात् ॥
दीक्षैव मोक्षयेत् पूर्वं दिव्यं धाम नयत्यपि।
उपपातकलक्षाणि महापातककोटयः ॥
क्षणाद्दहति देवेशि ! दीक्षा हि विधिना कृता।
यया चोन्मीलितात्मानो भवन्ति पशवः शिवाः ॥
सा दीक्षा श्रुदिता देवि ! चण्डपापविशोधिका।
यया दीक्षितमात्रेण जायन्ते प्रत्ययाः प्रिये ! ॥
सा दीक्षा मोक्षदा ज्ञेया शेषास्तु जनसेविकाः।
उपासनाशतेनापि या चिन्ता नैव पश्यति ॥
तां दीक्षामाश्रयेद्यत्नात् श्रीगुरोर्मन्त्रसिद्धये।
रसेन्द्रेण यथा विद्धमयः सुवर्णतां व्रजेत् ॥
दीक्षान्वितस्तथा ह्यात्मा शिवत्वं लभते प्रिये !।
दीक्षाग्निदग्धकर्मासौ मायाविच्छिन्नबन्धनः ॥
गतां परां ज्ञाननिष्ठां निर्वीजस्तु शिवो भवेत्।
गतं शूद्रस्य शूद्रत्वं विप्रस्यापि च विप्रता ॥
दीक्षासंस्कारसम्पन्ने जातिभेदो न विद्यते।
शिवलिङ्गे शिवां बुद्धिं कुर्वन् यत् पापमश्नुते ॥
देवेऽश्मलोहसद्रत्नजातिलिङ्गप्रतिष्ठितम्।
यथोच्यते तथा शुद्धा सर्ववर्णास्तु दीक्षिताः ॥
येन पूजितमात्रेण चाब्रह्मभुवनान्तिकम्।
पूजितं तेन सर्वं स्याद्दीक्षितेन न संशयः ॥
दीक्षितस्य न कार्य्यं स्यात्तपोभिर्नियमव्रतैः।
न तीर्थक्षेत्रगमनैर्न च शारीरयन्त्रणैः ॥
अदीक्षिता ये कुर्वन्ति जपपूजादिकाः क्रियाः।

न फलन्ति प्रिये ! तेषां शिलायामुप्तबीजवत् ॥
देवि ! दीक्षाविहीनस्य न सिद्धिर्न च सद्गतिः ।
तस्मात्सर्वप्रयत्नेन गुरुणा दीक्षितो भवेत् ॥
द्विजो यो दीक्षितः पश्चादन्त्यजः पूर्वदीक्षितः ।
द्विजः कनिष्ठ स ज्येष्ठ इति शास्त्रस्य निर्णयः ॥
गुरुशक्तिसुतानाञ्च यो भवेत् पूर्वदीक्षितः ।
गुरवस्तेन ते पूज्या नावमान्याः कथञ्चन ॥
शिष्यो दीक्षितमात्रश्चेद् यदि स्वर्गं गतो गुरुः ।
एकसन्तानकेनैव पूर्णसङ्ख्यां समाचरेत् ॥
दर्शनेषु च सर्वेषु गुरुणा ज्ञानशालिना ।
दीक्षितो यस्तु विधिना स मुक्तो नापरः प्रिये ! ॥
अधिवासस्य पूर्वन्तु चक्रपूजापुरःसरम् ।
दीक्षया शोधयेच्छिष्यमन्यथा निष्फलं भवेत् ॥
शूद्रसङ्करजातीनामादिशुद्धिर्विधीयते ।
पादुकादिप्रदानाद्यैः कुर्य्यात् पाशविमोचनम् ॥
एकाब्देन द्विजो योग्यः क्षत्रियो वत्सरद्वयात् ।
वैश्यो योग्यस्त्रिभिर्वर्षैश्चतुर्भिः शूद्र एव च ॥
विधवायाः सुतादेशात् कन्यायाः पितुराज्ञया ।
नाधिकारी सुतो नार्य्या भार्य्यया भर्त्तुराज्ञया ॥
यथाद्वेदाध्ययने शूद्रो नाधिकारी यथा भवेत् ।
तथैवादीक्षितस्यापि नाधिकारो कुलेश्वरि ! ॥
श्रीगुरुं गुरुपत्नीञ्च तत्पुत्रं शक्तिसैनिकान् ।
दीक्षितान् तोषयेद्देवि ! यथाविभवविस्तरम् ॥
इति ते कथितं किञ्चित् परीक्षा गुरुशिष्ययोः ।
दीक्षाभेदादिकं देवि ! किम्भूयः श्रोतुमिच्छसि ॥

इति कुलार्णवे महारहस्ये चतुर्दशोल्लासः ।

## पञ्चदश उल्लासः।

देव्युवाच। कुलेश ! श्रोतुमिच्छामि पुरश्चरणलक्षणम्।
स्थानाहारादिभेदञ्च वद मे परमेश्वर ! ॥
ईश्वर उवाच। शृणु देवि ! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि।
तस्य श्रवणमात्रेण मन्त्रतत्त्वं प्रकाशते ॥
जपयज्ञात् परो यज्ञो नापरोऽस्तीह कश्चन।
तस्माज्जपेन धर्मार्थकाममोक्षांश्च साधयेत् ॥
सर्वधर्मान् परित्यज्य मन्त्रराजं समभ्यसेत्।
अप्रमादात् भवेत् सिद्धिः प्रमादादशुभं भवेत् ॥
भोगापवर्गसङ्कल्पैः कल्पव्रतस्मृते जपः।
जपध्यानसमं योगं तस्माद्देवि ! समाचरेत् ॥
आब्रह्मबीजदोषाश्च नियमातिक्रमोद्भवम्।
ज्ञानाज्ञानकृतं सर्वं प्रणश्यति जपात् प्रिये ! ॥
संसारदुःखभूमिश्च यदीच्छेत् सिद्धिमात्मनः।
पञ्चाङ्गोपासनेनैव मन्त्रजापी व्रजेत् सुखम् ॥
पूजा त्रैकालिकी नित्यं जपस्तर्पणमेव च।
होमो ब्राह्मणभुक्तिश्च पुरश्चरणमुच्यते ॥
यद् यदङ्गं विहीयेत तत्संख्या द्विगुणो जपः।
कुर्य्याद्द्वित्रिचतुःपञ्चसंख्यानं साधकः प्रिये ! ॥
कुर्वते चाङ्गसिद्ध्यर्थं तदशक्तेन भक्तितः।
न चेदङ्गं विहीयेत मन्त्री नेष्टमवाप्नुयात् ॥
अन्नैश्चतुर्विधैर्देवि ! पदार्थैः षड्रसान्वितैः।
सुभोजितेषु विप्रेषु सर्वं हि सफलं भवेत् ॥
सम्यक्सिद्धैकमन्त्रस्य पञ्चाङ्गोपासनेन च।
सर्वमन्त्राश्च सिध्यन्ति त्वत्प्रसादात् कुलेश्वरि ! ॥
उपदेशस्य सामर्थ्यात् श्रीगुरोश्च प्रसादतः।

मन्त्रप्रभावशक्त्या च मन्त्रसिद्धिः प्रजायते ॥
स्वमन्त्राक्षरसंयुक्तमातृकाक्षरमम्बिके ! ।
पूर्वजन्मकृताभ्यासान्मन्त्रो वा शीघ्रसिद्धिदः ॥
दीक्षापूर्वं कुलेशानि ! पारम्पर्य्यक्रमागतम् ।
न्यायलब्धश्च यो मन्त्रः स च सिद्धो न संशयः ॥
मासमात्रं जपेन्मन्त्रं भूतलिप्या तु सम्पुटम् ।
क्रमात् क्रमात् सहस्रन्तु तस्य सिद्धो भवेन्मनुः ॥
सहस्रं प्रजपेन्मन्त्रं मातृकाक्षरसम्पुटम् ।
अनुलोमविलोमेन मन्त्रसिद्धिः प्रजायते ॥
त्रिषष्ट्यक्षरसंयुक्तमातृकाक्षरसम्पुटम् ।
क्रमोत्क्रमात् शतं जप्त्वा मासात् सिद्धो भवेन्मनुः ।
मातृकाजपमात्रेण मन्त्राणां कोटिकोटयः ।
जपिताः स्युर्न सन्देहो यद् यत् सर्वं तदुद्भवम् ॥
अनेन कोटिमन्त्राणि चिन्ताकुलकराणि च ।
मन्त्रं गुरुजपात् प्राप्तमेकं स्यात् सर्वसिद्धिदम् ॥
यदृच्छया श्रुतं मन्त्रं दृष्टेणापि छलेन च ।
पत्रे स्थितं वा चाध्याप्य तज्जपेन ह्यनर्थकृत् ॥
पुस्तके लिखितान्मन्त्रान् विलोक्य प्रजपन्ति ये ।
ब्रह्महत्यासमं तेषां पातकं परिकीर्त्तितम् ॥
पुण्यक्षेत्रं नदीतीरं गुहापर्वतमस्तकम् ।
तीर्थप्रदेशाः सिन्धूनां सङ्गमः पावनं वनम् ॥
उद्यानानि विविक्तानि विल्वमूलं तटं गिरेः ।
देवतायतनं कूलं समुद्रस्य निजं गृहम् ॥
साधनेषु प्रशस्तानि स्थानान्येतानि मन्त्रिणाम् ।
अथवा निवसेत्तत्र यत्र चित्तं प्रसीदति ॥
सूर्य्यस्याग्नेर्गुरोरिन्दोर्दीपस्य स्यन्दनस्य च ।

गोरक्षकुलवृक्षाणां सन्निधौ शस्यते जपः ॥
गृहे शतगुणं विन्द्याद्गोष्ठे लक्षगुणं भवेत् ।
कोटिर्देवालये पुण्यमनन्तं शिवसन्निधौ ॥
म्लेच्छदुष्टमृगव्यालशङ्कातङ्कविवर्जितः ।
एकान्तपावने निन्दारहिते भक्तिसंयुते ॥
स्वदेशे धार्म्मिके देशे सुभिक्षे निरुपद्रवे ।
रम्ये भक्तजनस्थाने निवसेत्तापसाश्रये ॥
राजानः सचिवा राज्ञः प्रभवाः पुरुषा जनाः ।
चरन्ति येन मार्गेण निवसेत्तत्र मन्त्रवित् ॥
जीर्णदेवालयोद्याने गृहे वृक्षतलेषु च ।
नदीतड़ागकूपेषु भूच्छिद्रादिषु नो विशेत् ॥
दीपनाथमविज्ञाय यो जपादिकमाचरेत् ।
वंशाश्मधरणीदारुतृणपल्लवनिर्मितम् ॥
वर्जयेदासनं धीमान् दारिद्र्यव्याधिदुःखदम् ।
तूलकम्बलवस्त्राणां सिंहव्याघ्रमृगाजिनम् ॥
कल्पयेदासनं धीमान् सौभाग्यज्ञानवृद्धिदम् ।
पद्मस्वस्तिकवीरादिष्वासनेषूपविश्य च ॥
जपार्चनादिकं कुर्य्यादन्यथा निष्फलं भवेत् ।
द्वादशावर्त्तयेद्बुद्ध्या प्रणवन्तु त्रिमात्रकम् ॥
मुञ्चेत् पिङ्गलया वायुं अन्तस्थं रेचको भवेत् ।
षोड़शावर्त्तकं तारं पूरयेद्वाह्यमारुतम् ॥
शनकैरिड़या बद्ध्वा पूरकं परिकीर्त्तितम् ।
द्वादशावर्त्तकं तारं वायुमध्ये तु कुम्भयेत् ॥
शोषयेद्वायुवीजेन देहशोषणमीरितम् ।
पुनश्च पूरयेद्वायुं विरेच्यापूर्य्य कुम्भयेत् ॥
देहं दहनवीजेन देहदाहनमीरितम् ।

पुनश्च पूर्ववद्वायुं विरेच्यापूर्य्य कुम्भयेत् ॥
शिवकुण्डलिनीयोगस्यन्दनामृतधारया ।
आपादमस्तकं देवि ! प्रापयेत् प्लावनं भवेत् ॥
जपो ध्यानं विना गर्भः सगर्भस्तद्विपर्य्ययः ।
अगर्भगर्भसंयुक्तः प्राणायामः शताधिकः ॥
तपांसि तीर्थयात्राद्यमथ दानव्रतादयः ।
प्राणायामस्य तस्यैते कलां नार्हन्ति षोड़शीम् ॥
मानसं वाचिकं पापं कायिकं वापि यत्कृतम् ।
तत् सर्वं निर्दहेच्छीघ्रं प्राणायामत्रयेण वै ॥
दह्यते ध्मायमानानां धातूनाञ्च यथा मलम् ।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य संयमात् ॥
प्राणायामैर्विशुद्धात्मा यद्यत् कर्म करोति हि ।
तत्तत् फलत्यसन्देहदप्रयत्नेन वा कृतम् ॥
आगमोक्तेन मार्गेण न्यासं नित्यं करोति यः ।
देवताभावमाप्नोति मन्त्रसिद्धिः प्रजायते ॥
यो न्यासकवचच्छन्नो मन्त्रं जपति च प्रिये ! ।
विघ्ना दृष्ट्वा पलायन्ते सिंहं दृष्ट्वा यथा गजाः ॥
अकृत्वा न्यासजालं यो मूढ़त्वात् प्रजपेन्मनुम् ।
बाध्यते सर्वविघ्नैश्च सिंहैर्मृगपशुर्यथा ॥
अक्षमाला द्विधा प्रोक्ता कल्पिताकल्पितेति च ।
कल्पिता मालाभिः कृता मातृका स्यादकल्पिता ॥
आदिक्षान्ताक्षरान्तत्वादक्षमालेति कीर्त्तिता ।
अनुलोमविलोमाभ्यां गणयेन्मन्त्रवित्तमः ॥
एकैकमङ्गुलीभिः स्याद्रेखाभिर्दशधा फलम् ।
मालाभिः शतसाहस्रं मालिन्यानन्तमुच्यते ॥
त्रिंशद्भिः स्याद्धनं पुष्टिः सप्तविंशतिभिर्भवेत् ।

पञ्चविंशतिभिर्मोक्षं पञ्चदश्याभिचारके ॥
पञ्चाशद्भिः कुलेशानि! सर्वसिद्धिरितीरिता।
अङ्गुष्ठेन च मोक्षः स्यात्तर्जनी शत्रुनाशिनी ॥
मध्यमां धनदां विद्यात् शान्तिकर्म्मण्यनामिका।
कनिष्ठा स्तम्भनाकर्षी चाङ्गुलीषु प्रकीर्त्तिता ॥
एतावच्च जपिष्यामीत्यादौ सङ्कल्प्य मन्त्रवित्।
स्थिरासनो जपित्वा च देव्यै सोदकमर्पयेत् ॥
उच्चैर्जपोऽधमः प्रोक्त उपांशुर्मध्यमः स्मृतः।
उत्तमो मानसो देवि! त्रिविधः कथितो जपः ॥
अतिह्रस्वो व्याधिहेतुरतिदीर्घे तपःक्षयः।
अक्षराक्षरसंयुक्त्या जपेन्मौक्तिकपंक्तिवत् ॥
मनसा यः स्मरेत् स्तोत्रं वचसा वा मनुं जपेत्।
उभयं निष्फलं देवि! भिन्नभाण्डोदकं यथा।
जातसूतकमादौ स्यात्तदन्ते मृतसूतकम् ॥
सूतकद्वयसंयुक्तो यो मन्त्रः स न सिध्यति।
अतस्तद्रहितं कृत्वा मन्त्रमावर्त्तयेत् सदा ॥
सूतकद्वयासंयुक्तो यो मन्त्रः स हि सिध्यति।
मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यः ॥
शतकोटिजपेनापि तस्य सिद्धिर्न जायते।
गुप्तवीर्य्याश्च ये मन्त्रा न दास्यन्ति फलं प्रिये! ॥
मन्त्राश्चैतन्यसहिताः सर्वसिद्धिकराः स्मृताः।
चैतन्यरहिता मन्त्राः प्रोक्ता वर्णास्तु केवलम् ॥
फलं नैव प्रयच्छन्ति लक्षकोटिजपादपि।
मन्त्रोच्चारे कृते यादृक् स्वरूपं प्रथमं भवेत् ॥
शतैः सहस्रैर्लक्षैर्वा कोटिजापेन तत् फलम्।
हृदये ग्रन्थिभेदश्च सर्वावयववर्द्धनम् ॥

आनन्दाश्रु च पुलको देहावेशः कुलेश्वरि ! ।
गद्गदोक्तिश्च सहसा जायते नात्र संशयः ॥
सकृदुच्चरितेऽप्येवं मन्त्रे चैतन्यसम्पुटे ।
दृश्यन्ते प्रत्यया यत्र पारम्पर्य्यं तदुच्यते ॥
बहुकूटाक्षरो मुग्धो बद्धः क्रुद्धश्च भेदितः ।
बालः कुमारो युवको वृद्धः प्रौढ़श्च गर्वितः ॥
स्तम्भितो मूर्च्छितः कष्टः संवीतः खण्डितः प्रिये ! ।
मन्त्रः पराङ्मुखश्छिन्नो वधिरोऽन्धस्त्वचेतनः ॥
केकरः क्षुधितः क्लृप्तः स्थानदुष्टश्च पीड़ितः ।
निस्नेहो विकलः स्तब्धो निर्जीवः खण्डितारिकः ॥
सुप्तस्तिरस्कृतो लोढ़ो मलिनश्च दुरासदः ।
निःसत्त्वो निर्दयो दग्धश्चपलश्च भयङ्करः ॥
निस्त्रिंशो विकृताचारः फलहीनो निकृन्तनः ।
निर्वीजो भूमितः शप्तो रूक्षः कष्टोऽङ्गहीनतः ॥
जड़ो रिपुरुदासीनो लज्जितो मोहितः प्रिये ! ।
मन्त्येतान् मन्त्रदोषांश्च ज्ञात्वा पश्चाज्जपेन्मनुम् ॥
सिद्धिर्न जायते तस्य लक्षकोटिजपादपि ।
कथ्यन्ते दशसंस्कारा मन्त्रदोषहराः प्रिये ! ॥
जननं जीवनं पश्चात्ताड़नं बोधनं ततः ।
अभिषेकोऽथ विमलीकरणाप्यायने तथा ॥
तर्पणं दीपनं गुप्तिः संस्काराः कुलनायिके ! ।
शाणोल्लीढ़ानि शास्त्राणि यथा स्युर्निशितानि वै ॥
मन्त्राश्च स्फूर्त्तिमायान्ति संस्कारैर्दशभिस्तथा ।
भक्ष्यं हविष्यं शाकादिविहितानि फलान्यपि ॥
मूलं शक्तुर्यवानाञ्च शस्तान्येतानि मन्त्रिणाम् ।
यस्यान्नपानमश्नाति कुरुते धर्मसञ्चयम् ॥

अन्नदातुः फलं चार्द्धं कर्त्तुश्चार्द्धं न संशयः।
तस्मात् सर्वप्रयत्नेन परान्नं वर्जयेत् सुधीः॥
पुरश्चरणकाले च काम्यकर्मस्वपीश्वरि!।
जिह्वा दग्धा परान्नेन करौ दग्धौ प्रतिग्रहात्॥
मनो दग्धं परस्त्रीभिः कार्य्यसिद्धिः कथं भवेत्।
इन्द्वग्निरुद्रग्रहयुग्वेदार्कदिक्षड़ष्टसु॥
षोड़शमनुवाणाब्धितिथित्रयोदशस्वपि।
लिखेत् षोड़शकोष्ठेषु मातृकार्णान् विचक्षणः॥
स्वनामाद्यक्षराद्यावन्मन्त्राद्यक्षरदर्शनम्।
सिद्धादीन् कल्पयेन्मन्त्री कुर्य्यात् सिद्धादिभिः पुनः॥
सिद्धसिद्धो जपात् सिद्धो द्विगुणात् सिद्धसाध्यकः।
सिद्धसुसिद्धोऽर्द्धजपात् सिद्धारिर्हन्ति बान्धवान्॥
साध्यसिद्धोऽतिसंक्लेशात् साध्यसाध्यो निरर्थकः।
साध्यसुसिद्धो भजनात् साध्यारिर्हन्ति गोत्रजान्॥
सुसिद्धसिद्धोऽर्द्धजपात्तत्साध्यस्तु यथोक्ततः।
तत् सुसिद्धो ग्रहादेव सुसिद्धारिः सगोत्रहा॥
अरिसिद्धः सुतं हन्यादरिसाध्यस्तु योषितम्।
तत् सुसिद्धः कुलं हन्ति स्वात्मानं हन्ति तद्रिपुः॥
सिद्धार्णा बान्धवाः प्रोक्ताः साध्यास्ते सेवकाः स्मृताः।
सुसिद्धाः पोषका ज्ञेयाः शत्रवो घातकाः स्मृताः॥
बान्धवा नवबाणैकाः स्युर्द्विषड्दशसेवकाः।
प्रापलेपपटुप्रापरुद्रश्चातिवकं नरः॥
लोकालोकपटुप्रापघनघातेषु भेदिताः।
वर्णाः क्रमात् युवान्त्यौ तु रेवत्यंशगतौ तयोः॥
जन्मसम्पद्विपत्क्षेमप्रत्यारिः साधको बधः।
मित्रं परममित्रञ्च जन्मादीनि पुनः पुनः॥

वाणं गौरं खुरं शोणं समीनो भेति राशिषु।
क्रमेण भेदिता वर्णाः कन्यायां शादयः स्मृताः।
लग्नो धनं भ्रातृबन्धुपुत्रशत्रुकलत्रकाः।
मरणं धर्मकर्मायव्यया द्वादश राशयः॥
नामाद्यक्षरमारभ्य यावन्मन्त्रादिमाक्षरम्।
त्रिधा कृत्वा स्वरैर्भिन्द्यात्तदन्यद्विपरीतकम्॥
कृत्वाधिकमृणं ज्ञेयमृणी चेन्मन्त्रवित्तमः।
स्वयमृणी चेत्तन्मन्त्रं जपेत् पूर्वमृणी यतः॥
वाय्वग्निभूजलाकाशाः पञ्चाशल्लिपयः स्थिताः।
मह्नीसलिलयोर्मित्रमनिलानलयोरपि॥
शात्रवं वैपरीत्येन मैत्रं सर्वत्र चापरम्।
परस्परविरुद्धानां वर्णानां यत्र सङ्गतिः॥
वर्जयेत्तादृशं मन्त्रं नासकृत् तत् कुलेश्वरि!।
एकाक्षरे तथा कूटे त्रैपुरे मन्त्रनायके॥
स्त्रीदत्ते स्वप्नलब्धे च सिद्धादीन्नैव शोधयेत्।
मन्त्रसिद्धोपदिष्टेषु चतुराम्नायजेषु च॥
मालामन्त्रेषु देवेशि! सिद्धादीन्नैव शोधयेत्।
नृसिंहार्कवराहाणां प्रासादप्रणवस्य च॥
सपिण्डाक्षरमन्त्राणां सिद्धादीन्नैव शोधयेत्।
मनोऽन्यत्र शिवोऽन्यत्र शक्तिरन्यत्र मारुतः॥
न सिध्यति वरारोहे! लक्षकोटिजपादपि।
वादार्थं पठ्यते विद्या परार्थं क्रियते जपः॥
ख्यात्यर्थं दीयते दानं कथं सिद्धिर्वरानने!।
धनार्थं गम्यते तीर्थं दम्भार्थं क्रियते तपः॥
अमेध्येन तु देहेन न्यासं देवार्चनं जपः।
होमं कुर्वन्ति ये मूढास्तत् सर्वं निष्फलं भवेत्॥

विण्मूत्रत्यागशेषादियुक्तः कर्म करोति यः।
जपार्चनादिकं सर्वमपवित्रं भवेत् प्रिये !॥
मलिनाम्बरकेशादिमुखदौर्गन्ध्यसंयुतः।
यो जपेत्तं दहत्याशु देवतासु जुगुप्सितम्॥
आलस्यं जृम्भणं निद्रां क्षुतं निष्ठीवनं भयम्।
नीचाङ्गस्पर्शनं कोपं जपकाले विवर्जयेत्॥
अत्याहारः प्रलापश्च प्रजल्पो नियमाग्रहः।
अन्यासङ्गश्च लौल्यञ्च षड्भिर्मन्त्रो न सिध्यति॥
उष्णीषी कञ्चुकी नग्नो मुक्तकेशो गणीवृतः।
अपवित्रोत्तरीयस्तु निर्गच्छन्न जपेत् प्रिये !॥
जाड्यं दुःखं तृणच्छेदं विवादं वा मनोरथम्।
वह्निः स्वदेहवासञ्च जपकाले विवर्जयेत्॥
शान्तः शुचिर्मिताहारो भूशायी भक्तिमान् वशी।
निर्द्वन्द्वः स्थिरधीर्मौनी संयतात्मा जपेत् प्रिये !॥
विश्वासास्तिक्यकरुणाश्रद्धानिष्ठमनिश्चयैः।
सन्तोषौत्सुक्यधर्मादिगुणैर्युक्तो जपेन्नरः॥
सुगन्धिपुष्पाभरणवस्त्रादिभिरलङ्कृतः।
तस्य हस्तगता सिद्धिर्नान्यस्य जपकोटितः॥
तन्निष्ठस्तद्गतप्राणस्तच्चित्तस्तत्परायणः।
तत्पदार्थानुसन्धानं कुर्वन् मन्त्रं जपेत् प्रिये !॥
जपात् श्रान्तः पुनर्ध्यायेत् ध्यानात् श्रान्तः पुनर्जपेत्।
इति ते कथितं किञ्चित् पुरश्चरणलक्षणम्॥
समासेन कुलेशानि ! किम्भूयः श्रोतुमिच्छसि॥

इति कुलार्णवे महारहस्ये पुरश्चरणकथनं नाम पञ्चदश उल्लासः।

---

## षोड़श उल्लासः ।

देव्युवाच । कुलेश ! श्रोतुमिच्छामि करुणामृतवारिधे ! ।
काम्यकर्म्मविधानञ्च वद मे परमेश्वर ! ॥
ईश्वर उवाच । शृणु देवि ! प्रवच्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण प्रयोगनिपुणो भवेत् ॥
मन्त्री विशुद्धहृदयः पूर्वोक्तविषयान्वितः ।
श्रीप्रासादपरामन्त्रं तत्त्वलक्षं जपेत् प्रिये ! ॥
दशांशं जुहुयाद्देवि ! संस्कृते हव्यवाहने ।
दशांशं तर्पयेद् दुग्धैः सलिलैः शालितण्डुलैः ॥
गन्धपुष्पाक्षताकल्पधनवस्त्रादिभिः प्रिये ! ।
भक्ष्यभोज्यान्नपानाद्यैर्हव्यद्रव्यैर्मनोहरैः ॥
तोषयेद् योगिनीचक्रं यथाविभवविस्तरैः ।
एवं न्यासजपध्यानसद्धोमार्चनतर्पणैः ॥
मन्त्रसिद्धमनुर्देवि ! साक्षात् परशिवो भवेत् ।
ततः स मनसोऽभीष्टान् प्रयोगान् कुलनायिके ! ॥
मन्त्रेणानेन मतिमान् साधयेद्भक्तियुक्तये ।
सिद्धमन्त्रस्य सिध्यन्ति षट्कर्माणि न संशयः ॥
नैव सिध्यन्त्यसिद्धस्य देवताशापमाप्नुयात् ।
काम्यप्रयोगकर्त्तॄणां परलोको न विद्यते ॥
प्रयोगसिद्धिरेवैषां फलमन्यन्न कारयेत् ।
एकस्यापि विधानस्य न कुत्रापि फलद्वयम् ॥
देवेशि ! दृश्यते तस्मान्निष्कामो देवतां यजेत् ।
होमतर्पणमन्त्राद्यैर्नानाध्यानविशेषकैः ॥
आत्मनश्च परस्यापि षट्कर्माणि समाचरेत् ।
लक्षमेकं जपेन्मन्त्रं न्यासध्यानसमन्वितः ॥
प्रयोगदोषशान्त्यर्थमात्मरक्षार्थमेव च ।

नचेत् फलमवाप्नोति देवताशापमाप्नुयात्॥
दिनमावर्त्तकरणयोगमृत्तन्तु पञ्चमम्।
दीपेशकुलचक्राणि ज्ञात्वा कर्माणि साधयेत्॥
ऋषिच्छन्दोदेवताङ्गन्यासध्यानार्चनादिकम्।
वीजं शक्तिं कीलकञ्च ज्ञात्वा मन्त्राणि साधयेत्॥
मन्त्रविद्याभेदनिद्रा व्योम्नि व्योमादिपञ्चकम्।
स्त्रीपुंनपुंसकादींश्च ज्ञात्वा कर्माणि साधयेत्॥
पञ्चशुद्ध्यासनप्राणायामाद्यासाद्यमालिका।
दोषसंस्कारशुद्ध्यादि ज्ञात्वा कर्माणि साधयेत्॥
तथैवासनदिग्बन्धनाड़ीबन्धादिसङ्गतिम्।
देवताकालमुद्रादि ज्ञात्वा शृणु वरानने !॥
साध्यसाधककर्माणि लेखनीद्रव्यपञ्चकम्।
स्थानं तत्त्वप्रमाणञ्च ज्ञात्वा कर्माणि साधयेत्॥
उत्पत्तिवसनावर्णमूर्त्तिसंस्कारसंस्थितम्।
कुण्डं तद्द्रव्यसङ्ख्यादीन् ज्ञात्वा होमं समाचरेत्॥
अग्निप्रभा धूम्रवर्णध्वनिगन्धशिखाकृतिः।
व्रतचेष्टादिकं ज्ञात्वा कल्पयेत्तु शुभाशुभम्॥
मन्त्रतत्त्वानुसन्धान-देहावेशादिलक्षणम्।
मन्त्रोच्चारणभेदञ्च ज्ञात्वा कर्माणि साधयेत्॥
मण्डलं सकलं द्रव्यं शुद्धिगन्धाष्टकादिकम्।
दीक्षाकामप्रदानादि ज्ञात्वा दीक्षां समाचरेत्॥
नित्यं नैमित्तिकं काम्यं नियमं नाम वासनाम्।
पूजाधारणयन्त्रादि ज्ञात्वा कर्माणि साधयेत्॥
पूजागृहप्रवेशादि कुलपूजादिलक्षणम्।
कुलद्रव्यादिसिद्धिञ्च ज्ञात्वा पूजां समाचरेत्॥
अन्तर्यागं वहिर्यागमर्घ्यादिस्थापनादिकम्।

पञ्चपुष्पाञ्जलिं देवि ! ज्ञात्वा कर्माणि साधयेत् ॥
पत्राधारादिकशतं द्रव्यं कामकलात्मकम् ।
वटुकादिबलिं देवि ! ज्ञात्वा कर्माणि साधयेत् ॥
कुलाकुलाख्यगमनं शक्तिभेदञ्च लक्षणम् ।
शुभलक्षणसंयुक्तस्त्रीसंस्कारार्चनादिकम् ॥
देवि ! सम्भोगकालञ्च ज्ञात्वा शक्तिं परिग्रहेत् ।
पानभेदफलोल्लासप्रमाणस्थितिलक्षणम् ॥
तत्त्वत्रयस्य स्वीकारं ज्ञात्वा कुलसुरां पिबेत् ।
चक्रप्रवेशं प्रणतिं स्थितिं निर्गमनं प्रिये ! ॥
योगिनीयोगचेष्टादि ज्ञात्वा भवति कौलिकः ।
रत्युल्लासनकालञ्च कुलदीपनिवेदनम् ॥
शान्तिस्तवादिपठनं ज्ञात्वा स्यात् कुलदेशिकः ।
मिथुनानुग्रहाष्टाष्टपुष्पिणी कन्यकार्चनाम् ॥
विशेषतिथिपूजाञ्च ज्ञात्वा कर्माणि साधयेत् ।
आम्नायभेदं सङ्कोचं पुष्पसङ्कोचमेवच ॥
गुरुत्रयं सम्प्रदायं ज्ञात्वा कर्माणि साधयेत् ।
श्रीतविद्याकुलाचारं मनुभेदञ्च पादुकाम् ॥
चरणत्रितयं देवि ! ज्ञात्वा कर्माणि साधयेत् ।
स्वाधिकस्य समन्यूनकौलिकाराधनक्रमम् ॥
सिद्धिमुद्राधरार्चादि ज्ञात्वा कर्माणि साधयेत् ।
गुर्वग्निप्रेतसंस्कारं अन्त्येष्टिं दिग्बलिक्रमम् ॥
मोक्षदीपविधानादि ज्ञात्वा कर्माणि साधयेत् ।
इत्याद्याः कथिताः किञ्चिद्विशेषाः कुलनायिके ! ॥
सर्वेषामपि मन्त्राणां विधिः सावरणक्रमः ।
मन्त्राः पुरुषदेवाः स्युर्विद्या स्त्रीदेवता प्रिये ! ॥
मन्त्राः पुंसो हुंफडन्ताः प्राणे चरति दक्षिणे ।

प्रबुध्यन्तेऽग्निजायान्ता विद्या स्त्रीदेवता प्रिये ! ॥
वामे प्राणे प्रबुध्यन्ते नमोऽन्ताः स्युर्नपुंसकाः।
नाड़ीद्वयगते सर्वे मन्त्रा बोधं प्रयान्ति च ॥
शान्तिके मनवः सौम्या भूयिष्ठेन्द्वमृताचराः।
स्वाहान्ताः स्युर्वियच्छायाः क्रूरकर्माणि साधयेत् ॥
सिद्धिपुष्टी वरौ दुःखं हुं फट् चैव तु मारणे।
स्तम्भने च नमः प्रोक्तं स्वाहा शान्तिकपौष्टिके ॥
होमतर्पणयोः स्वाहा न्यासपूजनयोर्नमः।
मन्त्रान्ते योजयेन्मन्त्री जपकाले यथा स्थितिः ॥
शान्तिके राजतं ताम्रं भूर्जपत्रन्तु वश्यके।
सर्वकार्य्येषु सौवर्णं क्रूरे स्यात् प्रेतकर्पटम् ॥
त्रिगन्धं शान्तिके प्रोक्तं पञ्चगन्धञ्च वश्यके।
सर्वकार्य्येष्वष्टगन्धं क्रूरे चाष्टविषाणि च ॥
शान्तिके लेखनी दूर्वा वश्यादौ शिखिपुच्छिका।
स्वगृहे शान्तिकर्म स्याद्वश्याद्यं चण्डिकालये ॥
सर्वकार्य्यं देवगृहे श्मशाने क्रूरकर्म च।
लक्षणान्येवमादीनि ज्ञात्वा गुरुमुखात् प्रिये ! ॥
सर्वकर्माणि कुर्वीत मन्त्री तत्तत्फलाप्तये।
मूले प्रासादबीजञ्च तरुणादित्यसन्निभम् ॥
उत्तमाङ्गे पराबीजं चन्द्रायुतसमप्रभम्।
परस्परजनस्पर्शजनितानन्दनिर्भरः ॥
मूलादिब्रह्मरन्ध्रान्तं अनवच्छिन्नरूपिभिः।
परमामृतसंसिक्तैः सिक्तमापादमस्तकम् ॥
आत्मानं भावयेन्नित्यं स भवेदजरामरः।
एवं ध्यात्वा कुलेशानि ! सर्वकर्माणि साधयेत् ॥
सिध्यन्ति तरसा देवि ! नात्र कार्य्या विचारणा।

न्यासभेदं प्रवक्ष्यामि सर्वसिद्धिकरं प्रिये ! ॥
ईप्सितं लभते येन पूजाहोमादिकं विना।
स्थाने मनोहरे देवि ! साधकः स्थिरमानसः ॥
स्थितो मृद्वासने ध्यायेत् गुरुवन्दनपूर्वकम्।
मस्तकस्थितसम्पूर्णचन्द्रमण्डलमण्डलम् ॥
श्रीप्रासादपरावीजं षोड़शस्वरसंयुतम्।
शुद्धस्फटिककर्पूरकुन्देन्दुधवलं प्रिये ! ॥
सचन्द्रविम्बसञ्जातसुधाप्लावितविग्रहम्।
आत्मानं भावयेन्नित्यं निश्चलेनान्तरात्मना ॥
सर्वाभीष्टं विलीयेत श्रीभद्रप्राप्तिकारणम्।
श्रीप्रासादपरामन्त्रमष्टोत्तरसहस्रकम् ॥
तरुणोल्लाससहितो मण्डलं पूजयेत् प्रिये !।
अपमृत्युमहारोगजरामरणजं भयम् ॥
ग्रहापस्मारवेतालभूतोन्मादादिजं भयम्।
जित्वाधिव्याधिरहितः पुत्रपौत्रसमन्वितः ॥
जीवेद्वर्षशतं सार्द्धं पूजितः सर्वमानवैः।
अश्रुतं बुध्यते शास्त्रं कविता निर्मला भवेत् ॥
चिन्मये रोचते साक्षान्नात्र कार्य्या विचारणा।
ज्वरोन्मादादिरोगेषु जपेच्छिरसि चिन्तयन् ॥
शूलवातव्रणग्रन्थिमूत्रकृच्छ्रादिसम्भवे।
तत्तत्स्थानेषु सम्पृष्ट्वा पूर्ववच्चिन्तयन् जपेत् ॥
महारोगेषु जातेषु सर्वाङ्गेषु विचिन्तयेत्।
तत्क्षणाच्छान्तिमायान्ति रोगाः सर्वे न संशयः ॥
देहेन्द्रियेषु यो ध्यायेन्नभेदिन्द्रियसौष्ठवम्।
यत्र वीजं स्मरेत्तत्र तत् फलं लभते ध्रुवम् ॥
सदा यश्चिन्तयेन्मूर्ध्नि स भवेदजरामरः।

स्वतीर्थे नान्यतीर्थे वा जलमध्येऽपि वा वसन् ॥
पराप्रासादमन्त्रज्ञो मुक्त एव न संशयः।
दिक्पीठक्षेत्रमुद्रादिवृक्षवल्लीमठादिकाः ॥
पूर्वभैरवदेव्यश्च ऊर्द्ध्वाम्नायस्य पार्वति!।
नित्यकारस्करोन्मत्तकण्टकीविप्रदण्डिभिः ॥
अस्थिकण्टकवृक्षाद्यैस्तदा न शुभकारणम्।
वटुकैः कृष्णवर्णैश्च समित्पत्रफलार्णवैः ॥
गृहधूमचिताङ्गारत्रिकटूत्मचिताञ्जनैः।
उन्मत्तरससंसिक्तैः पिष्ट्वा सम्यक् प्रसेचितैः।
साध्यपादरजोभिश्च चिताभस्मसमन्वितैः।
साध्यप्रतिकृतिं कुर्य्यादेकनक्षत्रवृक्षजाम् ॥
सम्यक् प्रतिष्ठितप्राणान् कुण्डस्योपरि चिन्तयेत्।
खनेत्तत्प्रतिमां मन्त्री कुण्डस्याधो यथाविधि ॥
मलीमसेन मनसा चाग्रदृष्टिरमर्षणः।
चितानले रिपुतरुसप्तकाष्ठसमेधिते ॥
तद्द्रव्यैर्जुहुयाद्देवि! विधिवन्मन्त्रवित्तमः।
कुर्य्याद्विशेषमुच्चार्य्य मारणादि न संशयः ॥
शान्तिके सात्त्विकं देवि! श्वेतवर्णं विचिन्तयेत्।
योऽन्यथा कुरुते मोहात् स भवेद्देवतापशुः ॥
तस्माद्देवि! महाषोढ़ान्यासं पूजाबलिं सुधीः।
कृत्वा कर्माणि कुर्वीत नान्यथा वीरवन्दिते! ॥
मूलाधारसरोजान्तं वह्निमध्यगतं प्रिये!।
पराप्रासादवीजं तत्कल्पान्ताग्निसमप्रभम् ॥
प्रतिलोमस्तु संवीतं दशभिर्व्यापकाक्षरैः।
स्वयं कालानलसमः सर्वभूतभयङ्करः ॥
दक्षिणाशामुखो भूत्वात्युग्रदृष्टिमलीमसः।

यौवनोल्लाससहितः पराप्रासादसंज्ञकम् ॥
मन्त्रं मण्डलकं जप्यादष्टोत्तरसहस्रकम् ।
अनिष्टकारिणः सत्त्वान्नियताशयकारिणः ॥
वृथाक्लेशकरान् क्रूरान् सपर्य्याविघ्नकारिणः ।
भूतोग्रग्रहवेतालान् पिशाचान् यक्षराक्षसान् ॥
इत्यादिदुष्टजन्तूंश्च सदा क्लेशकरान् परान् ।
तद्वह्निमध्यपतितान्निर्दग्धांश्च विचिन्तयेत् ॥
क्षणेन नाशमायान्ति शलभा इव पावके ।
यस्य मूर्द्ध्नि स्मरेद्बीजं स मृत्युमधिगच्छति ॥
ध्यानेनानेन देवेशि ! कौलादीनपि नाशयेत् ।
इति ते कथितं किञ्चित् काम्यकर्मविधिं प्रिये ! ।
समासेन कुलेशानि ! किम्भूयः श्रोतुमिच्छसि ॥

इति कुलार्णवे महारहस्ये काम्यकर्मविधानं नाम षोड़श उल्लासः

---

## सप्तदश उल्लासः ।

देव्युवाच । कुलेश ! श्रोतुमिच्छामि गुरुनामादिवासनाम् ।
तत्त्वं कुलपदार्थानां वद मे परमेश्वर ! ॥
ईश्वर उवाच । शृणु देवि ! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण कुलज्ञानं प्रवर्त्तते ॥
गुशब्दस्त्वन्धकारः स्यात् रुशब्दस्तन्निरोधकः ।
अन्धकारनिरोधत्वाद्गुरुरित्यभिधीयते ॥
गुह्यागमात्मतत्त्वान्धनद्धानां बोधनादपि ।
रुद्रादिदेवतारूपाद् गुरुरित्यभिधीयते ॥
स्वयमेवाचरेच्छिष्यो नाचारे स्थापयत्यपि ।
आचिनोतीह शास्त्रार्थानाचार्य्यस्तेन कथ्यते ॥

सर्वरोगप्रहरणं विद्यारोग्यप्रदं प्रिये !॥
अस्मात्परतरं कालं नास्ति सत्यं न संशयः।
सात्त्विकध्यानजं देवि! फलमेतदुदीरितम्॥
शान्तिकर्माणि सर्वाणि विधिनानेन कारयेत्।
विधिनानेन देवेशि! सौभाग्यमतुलं लभेत्॥
द्वादशाधारपद्मेषु द्वादशस्वरसंयुतम्।
वीजं सञ्चिन्तयेद्यस्तु स भवेदजरामरः॥
षड़ाधारेषु वा दीर्घयुक्तं वीजं विचिन्तयेत्।
षड़ाधारस्थदेवीभिः पूज्यते कुलनायिके !॥
हृत्पद्मकर्णिकामध्ये सूर्य्यमण्डलसंस्थितम्।
पराप्रासादवीजन्तु तरुणारुणसन्निभम्॥
जवाबन्धूकसङ्काशं पद्मरागप्रभोज्ज्वलम्।
पञ्चविंशतिभिः स्पर्शाक्षरैर्वाचान्तमम्बिके !॥
तत्प्रभापटलच्छायाव्यक्तीकृतजगत्त्रयम्।
आत्मानञ्च स्मरेद्देवि! निश्चलेनान्तरात्मना॥
पराप्रासादवीजन्तु तरुणोल्लाससंयुतः।
अष्टोत्तरसहस्रन्तु मण्डलं प्रजपेत्सुधीः॥
देवदानवगन्धर्वसिद्धकिन्नरगुह्यकान्।
विद्याधरान् मुनीन् यक्षान् नागानप्सरसः स्त्रियः॥
सिंहव्याघ्रोरगेन्द्रादीन् न्यासदुष्टमृगानपि।
वश्यान् करोत्यसन्देहं किं पुनर्मानवादयः॥
महदैश्वर्य्यमाप्नोति स्वर्गभोगादिकं प्रिये !।
यस्य मूर्द्ध्नि स्मरन् जप्यात् स वश्यो जायते हठात्॥
राजसध्यानजं देवि! फलमेतदुदीरितम्।
वश्यकर्माणि सर्वाणि विधिनानेन कारयेत्॥
सर्ववश्यकरं देवि! सर्वैश्वर्य्यफलप्रदम्।

अस्मात् परतरं ध्यानं नास्ति सत्यं न संशयः ॥
लिखेत्त्रिकोणं षट्कोणं अष्टारञ्च महीपुरम् ।
मूलमन्त्रं लिखेन्मध्ये साध्यनामसमन्वितम् ॥
षट्कोणेषु षड़ङ्गानि विलिखेत् परमेश्वरि ! ।
केशरेषु स्वरानष्टौ वर्गान् पत्रेषु पार्वति ! ॥
भूगृहस्य चतुःकोणे विलिखेन्मूलमम्बिके ! ।
पञ्चवर्णरजोभिश्च शुभदृष्टमनोहरम् ॥
एवं यन्त्रं समालिख्य विधिवन्मन्त्रमुत्तमम् ।
एकद्वित्रिषट्सु चतुःकलसान् स्थापयेत् प्रिये ! ॥
मध्यादिचतुरस्रान्तं द्वात्रिंशत्कलसान् प्रिये ! ।
अथवाष्टादशेशानि ! सप्त वा दश वा प्रिये ! ॥
चतुरो वाप्यथैकं वा कुर्य्यात् साधकसत्तमः ।
अस्थिरक्तशिरातन्तुसंयुतं रुधिरं जलम् ॥
चर्मवस्त्रासनं कूर्मनारिकेलफलं शिरः ।
मन्त्रपानसमायुक्तां यजेत् कलसदेवताम् ॥
सावित्री नापराङ्गानि मातरो भैरवान्विताः ।
विदितागुरुविघ्नेन दुर्गाक्षेत्रपतीन् प्रिये ! ॥
कलसेषु समभ्यर्च्य विधिवन्मन्त्रमुत्तमम् ।
अभिषिञ्चेत् प्रियं शिष्टं सर्वपापप्रणाशनम् ॥
आयुः श्रीकान्तिसौभाग्यविद्यारोग्यधनं भवेत् ।
राजाभिषिक्तो लभते चतुःसागरगां महीम् ॥
अकिञ्चिनोऽभिषिक्तश्च महदैश्वर्य्यमाप्नुयात् ।
बहुनात्र किमुक्तेन त्रिषु लोकेषु मन्त्रिणाम् ॥
अनेन मन्त्रराजेन नासाध्यं विद्यते क्वचित् ।
ऊर्द्धाम्नायैकनिष्ठातः पराप्रासादमन्त्रवित् ॥
कुलार्णवार्थतत्त्वज्ञो जीवन्मुक्तः कुलेश्वरि ! ।

आचारवशमापन्नमध्यापयति यः स्वयम् ॥
यमादियोगसिद्धत्वादाचार्य्य इति कथ्यते।
आत्मभावप्रसादात्तु रागद्वेषादिवर्जितात् ॥
ध्यानैकनिष्ठचित्तत्वादाराध्य इति कथ्यते।
देवतारूपधारित्वाच्छिष्यानुग्रहकारणात् ॥
करुणामयमूर्त्तित्वाद्देशिकः कथितः प्रिये!।
स्वान्तशान्तसुसम्शीलपरतत्त्वार्थचिन्तनात् ॥
मिथ्याज्ञानविहीनत्वात् स्वामीति कथितः प्रिये!।
मनोदोषादिदूरत्वाद्धेतुवादादिवर्जितात् ॥
अग्रादिप्राणिषु सदृशात् दृश्यत्वाच्च महेश्वरि!।
श्रीमोक्षज्ञानदातृत्वादात्मब्रह्मनिरोधनात् ॥
स्थगिताज्ञानचित्तत्वात् श्रीनाथः कथितः प्रिये!।
देशकालविरोधेन वर्त्तमानात् कुलागमे ॥
वशीकृतजगज्जीवाद्देव इत्यभिधीयते।
भवपाशप्रशमनात् टकारेणन्दुशेखरात् ॥
रक्षणात् कमनीयत्वाद्भट्टारक इतीरितः।
प्रगुप्तागमवेदान्तरहस्यात्मनिषेवणात् ॥
भक्तिमुक्तिप्रदानाच्च प्रभुरित्यभिधीयते।
योनिमुद्रानुसन्धानात् प्रस्फुरन्मन्त्रभैरवात् ॥
गीर्वाणगणपूज्यत्वाद्योगीति कथितः प्रिये!।
सङ्गदुःखपरित्यागो यत्र कृत्वाश्रमाश्रयात् ॥
मिथ आत्मानुसन्धानात् संयमीत्यभिधीयते।
तत्त्वरूपस्य मननात् परिवादादिवर्जितात् ॥
स्वीकारात् शुभकार्य्याणां तपस्वीत्यभिधीयते।
अक्षरत्वाद्वरेण्यत्वाद्धुतसंस्कारबन्धनात् ॥
तत्र यस्यात्मबोधत्वादवधूतोऽभिधीयते।

वीतरागमदक्लेशकोपमात्सर्य्यमोहतः ॥
रजस्तमोविदूरत्वाद्दीर इत्यभिधीयते ।
कुलं गोत्रं समाख्यातं तच्च शक्तिशिवोद्भवम् ॥
येन मोक्ष इति ज्ञानं कौलिकः सोऽभिधीयते ।
अकुलं शिवतासुक्तं कुलं शक्तिः प्रकीर्त्तितम् ॥
कुलाकुलानुसन्धानान्निपुणाः कौलिकाः प्रिये ! ।
सारसंग्रहणाच्चैव धर्मकर्मप्रवर्त्तनात् ॥
करणग्रामनियमात् साधकः सोऽभिधीयते ।
भजनात् परया भक्त्या मनोवाक्कायकर्मभिः ॥
तरत्यखिलदुर्गाणि तस्माद्भक्त इतीरितः ।
शरीरमर्थं प्राणांश्च सद्गुरुभ्यो निवेद्य यः ॥
गुरुभ्यः शिक्षते योगं शिष्य इत्यभिधीयते ।
योनिमुद्रानुसन्धानात् गिरिजापादसेवनात् ॥
विलीनोपाधिविभवाद्योगिनीत्यभिधीयते ।
शतकोटिमहादिव्ययोगिनीप्रतिकारणात् ॥
तीव्रस्फूर्त्तिप्रदानाच्च शक्तिरित्यभिधीयते ।
स्तोकस्तोकेन मनसः परमप्रीतिकारणात् ॥
स्तोत्रसन्तारणाद्देवि ! स्तोत्रमित्यभिधीयते ।
यावदिन्द्रियसन्तापमनसा संनियम्य च ॥
स्वान्तेनाभीष्टदेवस्य चिन्तनं ध्यानमुच्यते ।
चरितार्थविकाराच्च रक्षणादपि पार्वति ! ॥
नरनारोस्वरूपाच्च चरणं कथितं प्रिये ! ।
विदिताखिलशास्त्रार्थसर्वधर्मनिरूपणात् ॥
दर्शनानां प्रमाणत्वाद्वेद इत्यभिधीयते ।
पुण्यापुण्यादिकथनाद्राक्षसादिनिवारणात् ॥
नवतत्त्वादिकथनात् पुराण इति कथ्यते ।

शासनादनिशं देवि! वर्णाश्रमनिवासिनाम्॥
तारणात् सर्वपापेभ्यः शास्त्रमित्यभिधीयते।
स्मरणाद्धि निमित्तानां धर्माधर्मनिरूपणात्॥
तिमिरोत्पाटनाद्देवि! स्मृतिरित्यभिधीयते।
पापपुण्यादिकथनात् तिमिराञ्जनभञ्जनात्॥
हरणात् सर्वदुःखानां कृपानिधिरिति स्मृतः।
आचारकथनाद्दिव्यगतिप्राप्तिविधानतः॥
महात्मतत्त्वकथनादागमः कथितः प्रिये!।
शाकिनीगणपूज्यत्वात्तरणाद्भववारिधेः॥
परादिशक्तिसान्निध्याच्छाक्त इत्यभिधीयते।
कौमारादिनिरोधत्वात् लयजन्मादिभाजनात्॥
अशेषकुलसम्बन्धात् कौल इत्यभिधीयते।
पाशच्छेदकराद्देवि! रञ्जनात् परतेजसः॥
यतिभिश्चिन्त्यमानत्वात् पारम्पर्य्यमितीरितम्।
संसारसारभूतत्वात् प्रकाशानन्ददानतः॥
यशःसौभाग्यकरणात् सम्प्रदाय इतीरितः।
आदित्वात् सर्वमार्गाणां मनोल्लासप्रवर्त्तनात्॥
यज्ञादिधर्महेतुत्वादाम्नाय इति कीर्त्तितः।
संस्तुतानेकमाहेन्द्रयन्त्रतन्त्रादिदैवतात्॥
श्रौतरीप्यानवच्छिन्नात् श्रौत इत्यभिधीयते
आम्नायतत्त्वरूपत्वाच्चातुर्थ्यात्मनिरूपणात्॥
रागद्वेषादिशमनादाचार्य्य इति कीर्त्यते।
दिव्यभावप्रदानाच्च क्षालनात् कल्मषस्य च॥
दीक्षेति कथिता सद्भिर्भवबन्धविमोचनात्।
अलङ्कार इवाभाति कथनात् सेवनादपि॥
कल्याणानन्दादिजननादभिषेक इति स्मृतः।

मननात्तत्त्वरूपस्य देवस्यामिततेजसः ॥
त्रायते सर्वभयतस्तस्मान्मन्त्र इतीरितः ।
देहमास्थाय भक्तानां वरदानाच्च पार्वति ! ॥
तापत्रयादिशमनाद्देवता परिकीर्त्तिता ।
न्यायोपार्जितवित्तानामङ्गेषु विनिवेशनात् ॥
सर्वरक्षाकराद्देवि ! न्यास इत्यभिधीयते ।
मुदं कुर्वन्ति देवानां मनांसि तारयन्ति च ॥
तस्मात्तन्त्र इति ख्यातो दर्शितव्यः कुलेश्वरि ! ।
अनन्तफलदानाच्च क्षपिताशेषकल्मषः ॥
मातृकात्मतया लाभकरणादक्षमालिका ।
यमभूतादिसर्वेभ्यो भयेभ्योऽपि कुलेश्वरि ! ॥
त्रायते सततञ्चैव तस्मान्मन्त्र इतीरितः ।
आत्मसिद्धिप्रदानाच्च सर्वरोगनिवारणात् ॥
नवसिद्धिप्रदानाच्च आसनं कथितं प्रिये ! ।
मायाजालादिशमनान्मोक्षमार्गनिरूपणात् ॥
अष्टदुःखादिविरहान्मद्य इत्यभिधीयते ।
मङ्गल्यजननाद्देवि ! संविदानन्ददानतः ॥
सर्वदेवप्रियत्वाच्च मांस इत्यभिधीयते ।
पूर्वजन्मानुशमनादपमृत्युनिवारणात् ॥
सम्पूर्णफलदानाच्च पूजेति कथिता प्रिये ! ।
अभीष्टफलदानाच्च चतुर्वर्गफलाश्रयात् ॥
वन्दनात् सर्वदेवानामर्चनं समुदाहृतम् ।
तत्त्वात्मकस्य देवस्य परिवारवृतस्य च ॥
नवानन्दप्रजननात्तर्पणं समुदाहृतम् ।
गभीरापायदौर्भाग्यक्लेशनाशनकारणात् ॥
धर्मज्ञानप्रदानाच्च गन्ध इत्यभिधीयते ।

आत्मज्ञानप्रदानाच्च चपिताशेषकल्मषात् ॥
तदात्मकरणाद्देवि ! अक्षताः परिकीर्त्तिताः।
पुण्यसंवर्द्धनाच्चापि पापौघपरिहारतः ॥
पुष्कलार्थप्रदानाच्च पुष्प इत्यभिधीयते।
धूतशेषमहादोषपूतिगन्धप्रभावतः ॥
परमानन्दजननाद् धूप इत्यभिधीयते।
दीर्घाज्ञानमहाध्वान्ताहङ्कारपरिवर्जनात् ॥
परतत्त्वप्रकाशाच्च दीप इत्यभिधीयते।
मोहध्वान्तप्रशमनात् च्यार्त्तिविनिवारणात् ॥
दिव्यरूपप्रदानाच्च परतत्त्वप्रकाशनात्।
ख्यातो मोचो दीप इति मोचमार्गैकसाधनः ॥
चतुर्विधं कुलेशानि ! द्रव्यञ्च षड्रसान्वितम्।
निवेदनाद्भवेत्तृप्तिर्नैवेद्यं समुदाहृतम् ॥
बहुप्रकारविचरद्भूतौघविनिवारणात्।
लिप्तपापप्रशमनाद्बलिरित्यभिधीयते ॥
तत्त्वत्रयविशुद्धिः स्यात् वत्सरामात्रतः प्रिये !।
तत्त्वप्रकाशहेतुत्वात्तत्त्वत्रयमितीरितम् ॥
चतुर्वर्गफलावासोन्मोचिताज्ञानबन्धनात्।
कल्याणधर्ममूलत्वाच्चरकं कथितं प्रिये ! ॥
प्रकाशानन्दजननात् सामरस्यप्रदानतः।
दर्शनात् परतत्त्वस्य आनन्द इति कथ्यते ॥
पाशसच्छेदनाद्देवि ! नवतत्त्वस्य धारणात्।
पावनात् परमेशानि ! स्नानमित्यभिधीयते ॥
कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा।
समीपसेवा विधिना उपास्तिरिति कथ्यते ॥
पञ्चाङ्गोपासनेनेष्टदेवताप्रीतिदानतः।

पुरश्चरति भक्तस्य तत्पुरश्चरणं प्रिये ! ॥
आवाहनादिकर्माणि षोड़श द्वादशावधिम् ।
विधिनाचरणं प्रोक्तमुपहारमिति स्मृतम् ॥
सम्पूज्य सावृतं देवं षोड़शैरुपचारकैः ।
स्वस्थानप्रेषणं प्रोक्तं स्वद्वासनमिति प्रिये ! ॥
आसने सन्निवेशः स्यात् स्थापनं कुलनायिके ! ।
अन्योऽन्यसम्मुखाकारः सन्निधापनमीरितम् ॥
देवताङ्गे षड़ङ्गानां न्यासः स्यात् सकलीकृतिः ।
आच्छादनं समुद्दिष्टमवगुण्ठनमीरितम् ॥
दर्शयेद्धेनुमुद्राञ्च अमृतीकरणं प्रिये ! ।
चमत्वेत्यङ्गुलिर्देवि ! परमीकरणं भवेत् ॥
स्वागतं कुशलं प्रश्नं निगदेद्देवताग्रतः ।
पाद्यं श्यामाकदूर्वाब्जविष्णुक्रान्ताभिरुच्यते ॥
जातीलवङ्गकक्कोलैरुक्तमाचमनीयकम् ।
सिद्धार्थमक्षतञ्चैव कुशाग्रं तिलमेव च ॥
यवं गन्धं फलं पुष्पमष्टाङ्गार्घ्यः प्रकीर्त्तितः ।
मध्वाज्यदधिभिः प्रोक्तो मधुपर्कः कुलेश्वरि ! ॥
देहप्रक्षालनं स्नानं सुगन्धिसलिलैः सह ।
चन्द्रचन्दनकस्तूरीकालागुरुभिरुच्यते ॥
अष्टाङ्गप्रणिपातेन कथितं वन्दनं प्रिये ! ।
अतश्चराचरं सर्वं क्षेत्रमित्यभिधीयते ॥
तत् क्षेत्रं पालितं येन क्षेत्रपालः स उच्यते ।
इति ते कथितं किञ्चिद् गुरुनामादिवासना ॥
समासेन महेशानि ! यो जानाति स कौलिकः ।
रहस्यातिरहस्यानां रहस्योऽयं महेश्वरि ! ॥
ऊर्द्ध्वाम्नायः समाख्यातः समासेन न विस्तरात् ।

कुलार्णवमिदं शास्त्रं योगिनीनां हृदि स्थितम्॥
प्रकाशितं मया चाद्य गोपनीयं प्रयत्नतः।
पुस्तकञ्च महेशानि! पशुगेहे न निक्षिपेत्॥
न दद्यात् पशुहस्ते च न पठेत् पशुसन्निधौ।
न पठेदासवोल्लासं ग्रन्थं भूमौ न निक्षिपेत्॥
नित्यं सम्पूजयेद्भक्त्या जानीयाद् गुरुवक्त्रतः।
नापुत्राय प्रवक्तव्यं नाशिष्याय कदाचन॥
स्नेहाल्लोभाद्भयादुक्त्वा सोऽचिरान्नश्यति ध्रुवम्।
देवि! यद्विद्यते प्राज्ञे तत्तत् किञ्चिन्मयोदितम्॥
साधकानां हितार्थाय भक्तिमुक्तिफलैषिणाम्।
यश्चोर्द्ध्वाम्नायमाहात्म्यं पठेत् श्रीचक्रसन्निधौ॥
भक्त्या परमया देवि! यः शृणोति स कौलिकः।
व्रतं स्नानं तपस्तीर्थं यज्ञदेवार्चनादिषु॥
तत् फलं कोटिगुणितं लभते नात्र संशयः।
त्वत्सन्निधौ सन्निवसेत् नात्र कार्य्या विचारणा॥

इति कुलार्णवे महारहस्ये सप्तदश उल्लासः।

समाप्तोऽयं ग्रन्थः।



पण्डितकुलपतिः श्रीजीवानन्दविद्यासागर वि, ए।

PANDIT JIVANANDA VIDYASAGARA B. A.

SUPERINTENDENT FREE SANSKRIT COLLEGE CALCUTTA.

